श्रीगणेशायनमः ॥ श्रीसरस्वत्यैनमः ॥ श्रीगुरुचरणारविंदाभ्यांनमः ॥ चंडीकुंडलमाकलय्यकुतुकाद्दंडाभशुंडाग्रगंकृत्वा तांडवडंबरेपशुपतेःखेलन्खलूच्छृंखलम् ॥ चंडांशोरिवमंडलंतदपरंसंदर्शयन्नंबरेहेरंबोजगदंबिकांविहसयन्वःश्रेयसेगर्जतात् ॥ १ ॥ दिवाकरोनामबभूवविद्वान्दिवाकराभोगणितेपुमन्ये ॥ स्वकल्पितैर्येनविवृद्धवृंदैर्बद्धंजगद्दर्शितविश्वरूपम् ॥ २ ॥ तस्यात्मजाः पंचसमाबभूवुःपंचेंद्रकल्पागणितागमेषु ॥ पंचाननावादिगजेंद्रभेदेपंचाग्निकल्पाद्विजकर्मणाच ॥ ३ ॥ अजनिष्टकृष्णनामाज्येष्ठस्तेषांकनिष्ठानाम् ॥ विद्यानवद्यवाचांवेत्ताजगतःसदाचारी ॥ ४ ॥ तस्माज्जातःकनिष्ठोविबुधबुधगणश्रेष्ठतांप्रापजाग्रज्ज्योतिःशास्त्रेणशश्वत्प्रकटितविभवायस्यशिष्यप्रशिष्याः ॥ विष्णुर्ज्योतिर्विदुर्वीपतिविदितगुणोभूमिदर्वीकरेंद्रोग्रंथव्याख्यानखर्वीकृतविबुधगुरुर्गर्वहागर्वभाजाम् ॥ ५ ॥ आसीदासिंधुदासीकृतगणकगणग्रामणीगर्वभेत्तावेत्ता ग्रंथांतराणामतिगुरुरनुजस्तस्यकस्याप्यजेयः ॥ मल्लारिर्वादिवृंदप्रशमनविधयेकोपिमल्लारिनामाव्यक्ताव्यक्तप्रवक्ताजगतिविशदयत्सर्वसिद्धांतवेत्ता ॥ ६ ॥ तस्यानुजःकेशवनामधेयोज्योतिर्विदानंदसमुद्रचंद्रः ॥ वाणीप्रवीणोवचनामृतेनसंजीवयामासकलाविलासी ॥ ७ ॥ तस्यानुजःसंप्रतिविश्वनाथोविष्णुप्रसादाद्गुणमात्रजिष्णुः ॥ सर्वज्ञदैवज्ञविलासविज्ञोनृसिंहतःसाधितसर्वविद्यः ॥ ८ ॥ आसीद्वेदांतवेत्तास्मृतिनिगमपटुर्ग्रामणीगर्वभेत्ताकर्ताग्रंथांतराणांफणिपतिनिगमस्यापिवेत्ताधिकाशी ॥ वक्ताश्रीनीलकंठात्मजभजनपटुर्नीलकंठःसचक्रेसंज्ञातंत्रंदुरूहंसकलशुभदशादुर्दशादर्शभूतं ॥ ९ ॥ गोदातीरस्थगोलाभिधपुरवसतिःपार्थदैशैकभूपःसंज्ञातंत्रस्यटीकांव्यदधदभिनवांगद्यपद्यानवद्याम् ॥ शश्वद्विश्वोपकृत्यैविशदतरतयादैवविद्विश्वनाथोग्रंथोग्रग्रंथिभेत्ताग्रहगणितविदामग्रगण्योऽप्यगर्वः ॥ १० ॥ निर्विघ्नग्रंथसमाप्त्यर्थंमंगलमाचरन्चिकीर्षितंप्र

तिजानीते। श्रीनीलकंठःतत्ताजिकंतत्पूर्वाचार्योक्तंताजिकंसूक्तिभिःसदुक्तिभिःनानाछंदोभिर्वाविविनक्ति प्रकटीकरोति। कथं भूतंताजिकं। सूरिमनःप्रसादकृत् सूरयःपंडितास्तेषांमनःअंतःकरणंतस्यप्रसादकृत्। एतद्ग्रंथावलोकनेनपंडितमनःप्रसन्नंभवतीत्यर्थः। किंकृत्वा हेरंबंगणपतिंप्रणम्य। पुनःकिंकृत्वा दिवाकरंसूर्यंप्रणम्य। पुनःकिंकृत्वा अनंतदैवज्ञाख्यगुरोः पदांबुजं प्रणम्य ॥ १ ॥ पुमान्पुरुषराशिः चरश्चरसंज्ञकः अग्निरग्निराशिः सुदृढःदृढांगः चतुष्पाच्चतुश्चरणः रक्तःआरक्तवर्णः उष्णः

प्रणम्यहेरंबमथोदिवाकरंगुरोरनंतस्यतथापदांबुजम् ॥ श्रीनीलकंठोविविनक्तिसूक्तिभिस्तत्ताजिकं सूरिमनःप्रसादकृत् ॥ १ ॥ अथद्वादशराशिस्वरूपमाह। तत्रादौमेषस्य। पुमांश्चरोऽग्निःसुदृढश्चतुष्पाद्रक्तोष्णपित्तोऽतिरवोऽद्रिरुग्रः॥पीतोदिनंप्राग्विषमोदयोऽल्पसंगप्रजोरूक्षनृपःसमोऽजः ॥२॥ अथवृषराशिस्वरूपमाह॥वृषःस्थिरःस्त्रीक्षितिशीतरूक्षोयाम्येट्सुभूर्वायुनिशाचतुष्पात्॥श्वेतोऽतिशब्दोविषमोदयश्चमध्यप्रजासंगशुभोऽपिवैश्यः ॥ ३ ॥ ॥ ॥

उष्णस्वभावः पित्तःपित्तस्वभावः अतिरवोमहाशब्दः अद्रिःपर्वतचारी उग्रः क्रूरः पीतःपीतवर्णः दिनंदिवाबली प्राक्पूर्वदिक्स्वामीविषमोदयः अल्पसंगप्रजः अल्पस्त्रीसंगोऽल्पप्रजश्च रूक्षःकांतिरहितः नृपःक्षत्रियवर्णः समःसमांगः अजोमेषः एवंगुणविशिष्टोज्ञेयः। अयंराशिर्द्विवर्णः आरक्तवर्णःपीतवर्णश्च मेषसिंहधन्विनामेववर्णद्वयमुक्तम् कुतः समरसिंहेनोक्तत्वात्॥२॥ ॥ १ ॥ वृषःस्थिरःस्थिरसंज्ञकः स्त्री स्त्रीराशिः क्षितिर्भूमिराशिः शीतःशीतलस्वभावः रूक्षःकांतिरहितः याम्येट् दक्षिणदिक्स्वामी

सुभूःसुष्ठुभूमिचारी वायुःवायुप्रकृतिः निशारात्रिवली चतुष्पाच्चतुश्चरणः श्वेतःशुभ्रवर्णः अतिशब्दोमहाशब्दः विषमोदयः मध्यमप्रजासंगः मध्यमप्रजःमध्यमस्त्रीसंगश्च शुभःसौम्यः वैश्यःवैश्यवर्णः अयं श्लथांगः मेषसिंहधन्विनामेवदृढांगत्वमुक्तम् अर्थादितरे श्लथांगाबोध्याः ॥ ३ ॥ द्वंद्वंमिथुनराशिरेतादृशोज्ञेयः । यथा प्रत्यक्पश्चिमदिक्स्वामी समीरोवायुराशिः शुकभाःशुककांतिः हरितवर्णइत्यर्थः द्विपात्द्विचरणः ना पुरुषराशिः द्विमूर्तिर्द्विस्वभावः चरस्थिरस्वभावात्मकइत्यर्थः तत्रापि पूर्वार्धंस्थिरमुत्तरार्धंचरमितिविशेषोज्ञेयः उक्तंचभट्टोत्पलेन "चरराशौविपरीतंमिश्रंवाच्यंद्विमूर्त्युदये स्थिरवत्प्रथमेऽर्धेस्या

अथमिथुनराशिस्वरूपमाह॥ प्रत्यक्समीरःशुकभाद्विपान्नाद्वंद्वंद्विमूर्तिर्विषमोदयोष्णः॥ मध्यप्रजासंगवनस्थशूद्रोदीर्घस्वनःस्निग्धदिनेट्तथोग्रः॥ ४ ॥ अथकर्कराशिस्वरूपमाह॥ बहुप्रजासंगपदःकुलीरश्चरोऽगनापाटलहीनशब्दः॥ शुभःकफीस्निग्धजलांबुचारीसमोदयीविप्रनिशोत्तरेशः॥५॥

दपरेचरराशिवत्सर्वम्" इति विषमोदयः उष्णःउष्णस्वभावः मध्यप्रजासंगः मध्यमप्रजः मध्यमस्त्रीसंगश्च वनस्थोवनचारी शूद्रःशूद्रवर्णः दीर्घस्वनःमहाशब्दः स्निग्धःचिक्कणः दिनेट्दिवावली तथाशब्दःपादपूरणे । उग्रःक्रूरः अयं श्लथांगः ॥४॥ कुलीरःकर्कराशिः एतादृशोज्ञेयः यथा बहुप्रजासंगपदः बहुप्रजोबहुस्त्रीसंगोबहुचरणश्च चरश्चरसंज्ञकः अंगनास्त्रीराशिः पाटलःश्वेतरक्तवर्णः हीनशब्दोनिःशब्दः शुभःसौम्यः कफीकफप्रकृतिः स्निग्धःचिक्कणः जलंजलराशिः अंबुचारीजलचरः समोदयी विप्रोब्राह्मणवर्णः निशारात्रिवली उत्तरेशःउत्तरदिक्स्वामी अयंश्लथांगः ॥ ५ ॥ ॥ ॥

हरिःसिंहः सएताहशोज्ञेयः पुमान् पुरुषः स्थिरः स्थिरसंज्ञकः अग्निरग्निराशिः दिनंदिवाबली पीतःपीतवर्णः रूक्षःकांतिर हितः पित्तःपित्तप्रकृतिः उष्णःउष्णस्वभावः पूर्वेशःपूर्वदिक्स्वामी दृढोदृढांगः चतुष्पाच्चतुश्चरणः समोदयः दीर्घरवोम हाशब्दः अल्पसंगप्रजः अल्पस्त्रीसंगोऽल्पप्रजश्च शैलःपर्वतचारी नृपःक्षत्रियवर्णः उग्रःक्रूरः धूम्रो धूम्रवर्णः अयंराशिर्द्विवर्णः पीतोधूम्रश्च ॥ ६ ॥ कन्यास्वरूपमेतादृशम् पांडुःपिंगलवर्णः द्विपात्द्विचरणः स्त्री स्त्रीराशिः द्वितनुर्द्विस्वभावाचरस्थिर

अथसिंहराशिस्वरूपमाह ॥ पुमान्स्थिरोऽग्निर्दिनपीतरूक्षःपित्तोष्णपूर्वेशदृढश्चतुष्पात् ॥ समोदयोदीर्घरवोऽल्पसंगप्रजोहरिःशैलनृपोग्रधूम्रः ॥ ६ ॥ अथकन्याराशिस्वरूपमाह ॥ पांडुर्द्विपात्स्त्रीद्वितनुर्यमाशानिशामरुच्छीतसमोदयाक्ष्मा ॥ कन्यार्धशब्दाशुभभूमिवैश्यारूक्षाऽल्पसंगप्रसवाशुभाच ॥ ७ ॥ अथतुलाराशिस्वरूपमाह ॥ पुमांश्चरश्चित्रसमोदयोष्णःप्रत्यङ्मरुत्स्निग्धरवोनवन्यः ॥ स्वल्पप्रजासंगमशूद्रउग्रस्तुलोद्युवीर्योद्विपदःसमानः ॥ ८ ॥ ॥ ॥

द्विस्वभाविका यमाशादक्षिणदिक्स्वामी निशारात्रिबली मरुद्वायुप्रकृतिः शीताशीतस्वभावा समोदया क्ष्माभूमिराशिः अर्धशब्दाखंडशब्दा शुभभूमिःशुभभूमिचारी वैश्या वैश्यवर्णा रूक्षाकांतिरहिता अल्पसंगप्रसवाअल्पसंगाअल्पप्रसवाच शुभासौम्यराशिः चकारःसमुच्चयार्थः ॥ ७ ॥ पुमान्पुरुषराशिः चरश्चरसंज्ञकः चित्रोनानाविधवर्णः समोदयः उष्णः

स्वल्पप्रजःस्वल्पस्त्रीसंगश्च शूद्रःशूद्रवर्णः उग्रः क्रूरः द्युवीर्योदिवावली द्विपदःद्विचरणः समानःसमांगः अयंश्लथांगः तुला राशिरेतादृशोज्ञेयः ॥ ८ ॥ स्थिरःस्थिरसंज्ञकः सितःशुभ्रवर्णः स्त्रीस्त्रीराशिः जलंजलराशिः उत्तरेशः उत्तरदिक्स्वामी निशारात्रिवली रवोनोनिःशब्दः वहुपाद्वहुचरणः कफीकफप्रकृतिः समोदयः वारिचरःजलचरः अतिसंगप्रजःवहुस्त्रीसंगोवहुप्रजश्च शुभःसौम्यः स्निग्धतनुःचिक्कणतनुः द्विजःब्राह्मणवर्णः अलिर्वृश्चिकराशिरेतादृशोज्ञेयः अयंश्लथांगः ॥ ९ ॥

अथवृश्चिकराशिस्वरूपमाह ॥ स्थिरःसितःस्त्रीजलमुत्तरेशोनिशारवोनोबहुपात्कफीच ॥ समोदयोवारिचरोऽतिसंगप्रजःशुभःस्निग्धतनुर्द्विजोऽलिः ॥ ९ ॥ अथधनूराशिस्वरूपमाह ॥ नास्वर्णभाःशैलसमोदयोऽतिशब्दोदिनंप्राग्दृढरूक्षपीतः ॥ राजोष्णपित्तोधनुरल्पसूतिसंगोद्विमूर्तिर्द्विपदोऽग्निरुग्रः ॥ १० ॥ ॥ ॥ ॥

नापुरुषराशिः स्वर्णभाःस्वर्णकांतिः शैलःपर्वतचारी समोदयः अतिशब्दःमहाशब्दश्च दिनंदिवावली प्राक्पूर्वदिक्स्वामी दृढःदृढांगः रूक्षः कांतिरहितः पीतःपीतवर्णः राजाक्षत्रियवर्णः उष्णःउष्णस्वभावः पित्तःपित्तप्रकृतिः अल्पसूतिसंगःअल्पप्रजोऽल्पस्त्रीसंगश्चोच्यते द्विमूर्तिश्चरस्थिरस्वभावात्मकः द्विपदःद्विचरणः तत्रापिपूर्वार्धेद्विपदत्वंम् उत्तरार्धेचतुष्पदत्वं ज्ञेयं स्वयमेवाग्रेवक्ष्यति। अग्निरग्निराशिः उग्रःक्रूरः अयंराशिर्द्विवर्णः सुवर्णवर्णःपीतवर्णश्च धनूराशिरेतादृशोज्ञेयः ॥१०॥

मृगोमकरराशिरेतादृशोज्ञेयः चरःचरसंज्ञकः क्ष्माभूमिराशिः अर्धरवोऽर्धशब्दः यमाशादक्षिणदिक्स्वामी स्त्रीस्त्रीराशिः पिंगःपिंगलवर्णः रूक्षःकांतिरहितः शुभःसौम्यः भूमिःभूमिचारी शीतःशीतलस्वभावः स्वल्पप्रजासंगःस्वल्पप्रजःस्वल्पस्त्री संगश्च समीरोवातप्रकृतिः रात्रिःरात्रिवली आदौचतुष्पात् राशिपूर्वार्धेचतुष्पदत्वंज्ञेयम् उत्तरार्धेस्थलचरत्वंज्ञेयम् उत्तरार्धे जलचरत्वमित्यग्रेवक्ष्यति विषमोदयः विट्वैश्यवर्णः अयंश्लथांगः ॥ ११ ॥ कुंभराशिरेतादृशोज्ञेयः अपदःचरणहीनः

अथमकरराशिस्वरूपमाह ॥ मृगश्चरःक्ष्मार्धरवोयमाशास्त्रीपिंगरूक्षःशुभभूमिशीतः ॥ स्वल्पप्रजा संगसमीररात्रिरादौचतुष्पाद्विषमोदयोविट् ॥११॥ अथकुंभराशिस्वरूपमाह ॥ कुंभोऽपदोनादि नमध्यसंगप्रसूःस्थिरःकर्बुरवन्यवायुः ॥ स्निग्धोष्णखंडस्वरतुल्यधातुःशूद्रःप्रतीचीविषमोदयोग्रः ॥ ॥ १२ ॥ अथमीनराशिस्वरूपमाह ॥ मीनोऽपदःस्त्रीकफवारिरात्रिर्निःशब्दबभ्रुर्द्वितनुर्जलस्थः ॥ स्निग्धोऽतिसंगप्रसवोऽपिविप्रःशुभोत्तराशेड्विषमोदयश्च ॥ १३ ॥ ॥ ॥

नापुरुषराशिः दिनंदिवावली मध्यसंगप्रसूः मध्यमस्त्रीसंगोमध्यमप्रसवश्च स्थिरःस्थिरराशिः कर्बुरश्चित्रवर्णः वन्योवनचारी वायुर्वायुराशिः स्निग्धःचिक्कणः उष्णःउष्णस्वभावः खंडस्वरोऽर्धस्वरः तुल्यधातुः समवातपित्तकफप्रकृतिः शूद्रःशूद्रवर्णः प्रतीचीपश्चिमदिक्स्वामी विषमोदयः उग्रःक्रूरः अयंश्लथांगः ॥ १२ ॥ मीनराशिरेतादृशोज्ञेयः अपदश्चरणहीनः स्त्रीस्त्री राशिः कफःकफप्रकृतिः वारिजलराशिः रात्रिःरात्रिवली निःशब्दःशब्दरहितः बभ्रुःपिंगलवर्णः द्वितनुश्चरस्थिरस्वभावा

त्मकः जलस्थःजलराशिः स्निग्धःचिक्कणः अतिसंगप्रसवःअत्यंतस्त्रीसंगोत्यंतप्रसवश्च अपिशब्दःसमुच्चये विप्रोब्राह्मणवर्णः शुभःसौम्यःउत्तरदिक्स्वामी विषमोदयः अयंश्लथांगः ॥ १३ ॥ धरांबुनोःपृथ्वीराशिजलराश्योर्वर्गेसुहृत्त्वंमित्रत्वं एवं अग्निसमीरयोः अग्निराशिवायुराश्योर्वर्गेऽपिमित्रत्वंज्ञेयम्। परतः एतद्वैपरीत्ये अरिभावःशत्रुभावः। एतदुक्तंभवति पिता पुत्रयोः स्त्रीपुरुषयोर्वा स्वामिसेवकयोर्वा यस्यकस्यापिमैत्रीविचारे पृथ्वीराशिजलराशिसंबंधेमित्रत्वंवक्तव्यम्। एवम

एवंराशिस्वरूपमुक्त्वेदानींराशीनांमित्रामित्रविभागमाह ॥ धरांबुनोरग्निसमीरयोश्चवर्गेसुहृत्त्वंप रतोऽरिभावः॥ चापांत्यभागस्यचतुष्पदत्वंज्ञेयंमृगांत्यस्यजलेचरत्वम् ॥ १४ ॥ अथोक्तराशिस्वरूपस्यफलकथनार्थंसंक्षेपेणकिंचित्स्वरूपमाह ॥ पित्तानिलौधातुसमःकफश्चत्रिर्मेषतःसूरिभिरूहनीयाः ॥ राजन्यविट्शूद्रधरासुराश्चसर्वंफलंराश्यनुसारतःस्यात् ॥ १५ ॥ ॥ ॥

ग्निराशिवायुराशिसंबंधेमित्रत्वंवाच्यम् अन्यथाशत्रुत्वम् यथाभूम्यग्न्योर्भूम्यनलयोरंब्वग्न्योरंबुवाय्वोर्वर्गेशत्रुत्वम् ॥ यद्वा द्वयोरेकएवपृथिव्यादिवर्गःस्यात् तदाद्वयोःपरस्परमतिप्रीतिरित्यर्थतः सिद्धम् ॥ अथराशिस्वरूपकथनावसरेधनुर्मकरयोरनुक्तेकिंचित्स्वरूपविशेषेसिंहावलोकनन्यायेनाह । चापेति । चापस्यधनुषःअंत्यभागेउत्तरार्धेचतुष्पदत्वंज्ञेयम् मृगस्यमकरस्यांत्यभागेउत्तरार्धेजलचरत्वंज्ञेयम् ॥ १४ ॥ पित्तानिलाविति । मेषःपित्तं वृषोऽनिलोवायुः मिथुनःधातुसमोवातपित्तकफात्मकः कर्कःकफी तथासिंहःपित्तं कन्याऽनिलः तुलाधातुसमः वृश्चिकःकफी एवंधनुःपित्तं मकरोऽनिलः कुंभोधातुसमः

मीनःकफीति मेषतःमेषमारभ्यमीनपर्यंतंचतुष्कंचतुष्कंकृत्वा त्रिस्त्रिरावृत्तंभवति एतेराशयःसूरिभिःपंडितैरूहनीयाःज्ञातव्याः॥ अथराजन्यविट्शूद्रधरासुराणांद्वादशराशिषुत्रिरावृत्तिर्ज्ञातव्या। तद्यथा मेषोराजन्यःक्षत्रियवर्णः वृषःविट्वैश्यवर्णः मिथुनःशूद्रवर्णः कर्कोधरासुरोब्राह्मणवर्णः तथासिंहःक्षत्रियवर्णः कन्यावैश्यवर्णा तुलाशूद्रवर्णा वृश्चिकोब्राह्मणवर्णः एवं धनुःक्षत्रियवर्णः मकरोवैश्यवर्णः कुंभःशूद्रवर्णः मीनोब्राह्मणवर्णः एतेषांसर्वफलंराश्यनुसारतोराशिस्वरूपसदृशंफलंस्यादित्यर्थः ॥१५॥ अथगणितंवक्ष्यति तत्रादौग्रहाणांचालनंवक्ष्यति। तत्रचालनेवर्षप्रवृत्तिरपेक्षिता साचग्रंथकर्त्राऽत्रनोक्ता।

। अथवर्षफलसाधनार्थंवर्षप्रवृत्तिसमयमाह ॥ गताःसमाःपादयुताःप्रकृतिघ्नसमागणात् ॥ खवेदा ४० सघटीयुक्ताजन्मवारादिसंयुताः ॥ अब्दप्रवेशेवारादिसप्ततष्टेऽत्रनिर्दिशेत् ॥ १६ ॥ ॥

कुतः वर्षतंत्रेउक्तत्वात् सातुअस्माभिरत्रोपयुक्तत्वात्प्रदर्श्यते। अन्यच्चवर्षेशनिर्णयदशांतर्दशामासप्रवेशदिनप्रवेशादिकंअत्रोपयुक्तम् तत्तुवर्षतंत्रेप्रदर्शितमितिनात्रप्रदर्शितम् अत्रतु अस्माभिःयस्ययत्रउपयोगः तत्रतत्प्रदर्श्यते॥ गताःसमाःगतवर्षाणि तद्यथाजन्मकालिकः शकोवर्तमानशकात्शोध्यः शेषंगतसमाः ताःपादयुताःस्वचतुर्थांशेनयुताःकार्याः प्रकृतिरेकविंशति स्तद्घ्नःतेनगुणितोयःसमागणोवर्षगणःतस्मात् खवेदा ४० सघटीयुक्ताश्चत्वारिंशताभक्तात्घट्यादियल्लब्धंतेनचतुर्थांशयुक्तसमायुताःकार्याः ततःजन्मवारादिजन्मकालिकवारइष्टघटीपलैःसंयुताःकार्याः तदनंतरं ऊर्ध्वांकेसप्ततष्टेसप्तभिर्भक्तेयच्छेषंतत्अत्रअस्मिन्ग्रंथेअब्दप्रवेशेवर्षप्रवेशेवारादिवारघटीपलात्मकंनिर्दिशेत्वदेत् अत्रवर्तमानोवारोज्ञेयः ॥ १६ ॥

अब्दःगतवर्षगणः शिवघ्नःएकादशभिर्गुण्यः स्वखाद्रींदुलवाढ्यः स्वकीयोयःसप्तत्यधिकशतभागस्तेनाढ्यःयुक्तःकार्यःजन्म तिथ्यन्वितः शुक्लप्रतिपदमारभ्यजन्मकालीनवर्तमानतिथिभिरन्वितःयुक्तःकार्यः खाग्निशेषितःत्रिंशताभक्तःतत्रतिथौतस्मि न्शेषेऽपितिथौअब्दप्रवेशनंवर्षप्रवेशोभवति अस्यांतिथौवर्षप्रवेशोभवतीतिनियमोनास्ति कदाचित्पूर्वतिथौअग्रिमतिथौच भवति अत्रवारस्यैवप्रामाण्यं तिथित्रयस्यमध्येयस्मिंस्तिथौपूर्वानीतवारोभवतिसाएववर्षप्रवेशेतिथिर्ज्ञातव्या यत्रकुत्रापिशेषि तत्तष्टः एवमब्दआयातितत्रलब्धस्यत्यागः शेषस्यग्रहणमितिज्ञैर्ज्ञेयम् ॥ अथोदाहरणक्रमोलिख्यते तत्रादौकस्यचिज्जन्मस

## अथतिथिसाधनमाह॥शिवघ्नोऽब्दःस्वखाद्रींदुलवाढ्यःखाग्निशेषितः॥जन्मतिथ्यन्वितस्तत्रतिथा-वब्दप्रवेशनम् ॥ १७ ॥/ ॥ ॥ ॥ ॥

मयोलिख्यते ॥ संवत् १६४८ शके १५१३ माघशुक्लप्रतिपदाबुधे घटी ३६ श्रवणनक्षत्रघटी ५४ वज्रयोगघटी ६ अस्मिन् शुभदिने श्रीसूर्योदयादिष्टघटी ३७ पलेषु ५२ तथारात्रिगतघटी १२ पलानि ३१ जन्म ॥ अक्षभा ७।३० देशांतरयो जनानिधनानि ३० सूर्यः ९।७।३०।६ जन्मलग्नम् ५।१०।५३।५० ॥ अथवर्षप्रवेशस्योदाहरणम् ॥ तत्रजन्मकालीनः शकः १५१३ वर्तमानशकात् १५५० शोधितः शेषांकप्रमितोजातोगतवर्षगणः ३७अयंस्वचतुर्थांशेन ९।१५।० युक्तः गतवर्षगणः ४६।१५।० गतवर्षगणः३७ एकविंशतिभिर्गुणितःजातोऽयमंकः ७७७ अयं ४० चत्वारिंशताभक्तः लब्धंघटीपलात्मकम् १९। २५।३०एतच्चतुर्थांशयुक्तेसमागणे ४६।१५घटीषुयुतंजातं ४६।३४।२५।३०एतज्जन्मवारादिना ४।३७।५३युतंजातोऽयमंकः

५।१२।१८।३० ऊर्ध्वांकेसप्ततष्टेशेषंवर्षप्रवेशेवारादि २।१२।१८।३०॥ अथप्रकारांतरेणवर्षप्रवेशानयनमाह॥ वर्षध्रुवांकः ३६५।१५।३१।३० अयंगतवर्षेण ३७ गुणितः १३५१४।३४।२५।३० एतज्जन्मवारादि ४।३७।५२ युतोजातोयमंकः १३५१९।१२।१८।३० ऊर्ध्वांकेसप्ततष्टे शेषंवर्षप्रवेशेवारादि २।१२।१८।३०॥ अथतिथ्यानयनम्॥ गतवर्षगणः ३७ एकादशभि ११ गुणितः ४०७ अयंस्वकीयसप्तत्यधिकशत १७० भागेन २ युक्तः ४०९ अयंजन्मकालीनशुक्लप्रतिपदमारभ्य वर्तमान २ तिथिभिर्युक्तः ४११ त्रिंशताताष्टः शेषप्रमिता २१ जातावर्षप्रवेशेकृष्णपक्षेषष्ठी अस्यांतिथौपूर्वानीतवारोनास्ति अग्रिमतिथौवर्तते इतिकारणात् अस्यांतिथौ २१ एकः १ युक्तः २२ जाताकृष्णपक्षसप्तमी अत्रयस्मिन्मासेजन्मभवति तस्मिन्मासेवर्षप्रवेशोभवति कदाचिज्जन्ममासात्पूर्वस्मिन्मासेऽथवाऽग्रिममासेचभवतितत्रप्रमाणंवक्ष्यते॥जन्मकालीनरविणासहतुल्योरविर्यस्मिन्मासेभवतिसएववर्षप्रवेशेमासोज्ञेयः संवत् १६८५ शके १५५० माघकृष्णसप्तमी सोमेघटी ३७ पलानि ३९ हस्तनक्षत्रघटी १७ पलानि २८ सुकर्मायोगघटी २७ पलानि२८अस्मिञ्शुभदिनेसूर्योदयाद्गतघटीषु १२ पला० १८ विप० ३० वर्ष ३८ प्रवेशः॥ अथैतद्वर्षप्रवेशसमयेप्रमाणमाह। वर्षप्रवेशकालेऽर्कः "तत्कालेऽर्कोजन्मकालरविणास्याद्यतःसमः।सएवमासोविज्ञेयोवर्षावेशेबुधैर्ध्रुवम्"॥यतःयस्मात्कारणात् तत्कालेवर्षप्रवेशसमयेकरणोक्तरीत्यासाधितः सूर्योजन्मकालीनरविणासमस्तुल्योराश्यंशकलाविकलात्मकोभवतिइदमेववर्षप्रवेशसमयेप्रमाणम् । अस्योदाहरणमग्रेप्रदर्श्यते । गणेशदैवज्ञैःस्वकृतताजिकभूषणे जन्मकालीनसूर्येणसहवर्षप्रवेशकालीनोऽर्कः कलासुतुल्योनायातीतिज्ञात्वावर्षप्रवेशसमये भ्रांत्याअन्यसंस्कारोऽप्युक्तः यद्वाक्यंच । शाकेजन्मशकोनितेभवतियच्छेषंगताब्दव्रजोऽधोऽधःसंगुणितःशरैश्च ५ युगुले

नांगै २।६ युंगै ४ र्भाजितः ॥ लब्धंतज्जननोत्थवारघटिकाब्देनान्वितंसप्तभिः७पूर्कंविहृतेऽत्रशेषकमितौवर्षप्रवेशोध्रुवः ॥ १ ॥ वर्षप्रवेशोत्थघटीपलाढ्येकालेकिलस्पष्टतरःसनूनम् ॥ भानुर्जनुर्भानुसमानएपसिद्धांतरीत्यापरिसाधनीयः ॥ २ ॥ जन्मकालनलिनीविलासिनानैवजातुतुलतांकलासुचेत् । वर्षकालनलिनीपतिस्तयोरंतरंगतिहृतंयुतोनितम् ॥ ३ ॥ कार्यवर्षध्रुवेतस्मादसौस्पष्टःप्रजायते । तत्कालसंभवैर्भावैःखेटैश्चफलनिर्णयः ॥ ४ ॥ अथगणेशदैवज्ञभ्रांतिदूरीकरणार्थमुदाहरणं प्रदर्श्यते । जन्मसमयेसिद्धांतरहस्याहर्गणः २१२८ चक्रं ६ सूर्योदये मध्यमोर्कः ९।६।७।४२ देशांतरविकलाभि २२ युंतः ९।६।८।५ इष्टघटीभिः ३७।५२ चालितः जातस्तात्कालिकोर्कः ९।६।४५।२५ मंदकेंद्रं ५।११।१४।३५ मंदफलंधनम् ० ४२।२३ संस्कृतोऽर्कः ९।७।२७।४८ अयनांशाः १७।४९ चरखंडानि ७५।६०।२५ चरंधनम् १३८ संस्कृतोजातो जन्मसमयेस्पष्टोऽर्कः ९।७।३०।६॥ अथवर्षप्रवेशसमये सिद्धांतरहस्याहर्गणः ३५।९५ चक्रं ९ सूर्योदयेमध्यमोऽर्कः ९।६।३२।५८ देशांतरविकलाभिर्युक्तः ९।६।३३।२० इष्टघटीभिः १२।१८।३० चालितः जातस्तात्कालिकोऽर्कः ९।६।४५।२७ मंदकेंद्रं ५।११।१४।३३ मंदफलंधनं ०।४२।२३ संस्कृतोऽर्कः ९।७।२७।५० अयनांशाः १८।२६ चरखंडानि ७५।६०।२५ चरंधनम् १३६ संस्कृतोजातोवर्षप्रवेशसमयेस्पष्टोऽर्कः ९।७।३०।६ अयंवर्षकालीनःसूर्यःपूर्वानीतजन्मकालीनसूर्येणसहतुल्यो जातइति एतेनगणेशदैवज्ञमतंनिरस्तं अनयारीत्याद्वयोस्तुल्यताभवतीतिगणेशदैवज्ञैर्नविलोकितमितिज्ञायते तैस्तुवर्षप्रवेशं स्पष्टघटीभिः पंचांगस्थितसूर्यस्यचालनंदत्वाजन्मकालीनसूर्येणसहकलासुतुल्यतानायातीतिदृष्ट्वावर्षप्रवेशघटीषुअन्यः संस्कारोप्युक्तइतिचेदुच्यते तत्रापिहेतुरुच्यतेइदमेवांतरंपततीति सत्यं अत्रापिहेतुस्तैर्नबुद्धःअस्माभिःप्रदर्श्यते सौरब्राह्मार्याइत्यादि

पक्षाणांपरस्परमंतरेसतिजन्मकालीनसूर्यपंचांगस्थितसूर्ययोरंतरंपतति एकपक्षमंगीकृत्यउभयोःसाधनंचेत्क्रियतेतदाअंतरंन पतति ॥ ननुसौरपक्षाज्जन्मकालीनसूर्यःसाधितः सौरपक्षात्पंचांगस्थसूर्योऽपिवर्तते तत्राप्यंतरंपततीतिचेदुच्यतेहेतुः येनयस्य कस्यापिजन्मसमयेग्रहसाधनंक्रियतेतेनतस्यकस्मिन्ग्रामेजन्मतद्ग्रामस्यचरदेशांतरसंस्कारःक्रियतेयेनयद्ग्रामस्यपंचांगंक्रियते तेनतद्ग्रामस्यचरदेशांतरसंस्कारोग्रहेषुक्रियते ग्रामेग्रामेचरदेशांतरंभिन्नंभिन्नंइतिकारणादंतरंपतति उभयोरेकदेशस्थसंस्कार श्चेत् क्रियतेतदांतरंसर्वथानपतति यस्माद्ग्रंथात्साधितःसूर्योजन्मकालीनोयावद्भिःसंस्कारैःसंस्कृतोभवतितावद्भिःसंस्कारैः

| रव्यादयःस्पष्टाःस्युः | | | | | | | |
|---|---|---|---|---|---|---|---|
| सू | चं | मं | बु | गु | शु | श | रा |
| ९ | ५ | ८ | ८ | ८ | ७ | ६ | २ |
| ७ | २२ | १४ | १२ | २९ | २४ | ६ | २२ |
| ३० | ९ | ३२ | १६ | ३५ | ३१ | ४८ | २४ |
| ६ | ४७ | ३६ | ५८ | १३ | ४८ | ५४ | २६ |
| ६१ | ८१५ | ४४ | ५९ | १३ | ७० | ३ | ३ |
| १७ | २४ | १ | २३ | ५० | ७ | ११ | ११ |

अथवर्षप्रवशसमयेस्पष्टाग्रहाःसाध्याः ॥ तत्रापिसुखार्थपंचांगस्थितग्रहे पुचालनमाह ॥ गतैष्यदिवसाद्येनगतिर्निघ्नीखषड्६०हृता ॥ लब्धमं शादिकंशोध्यंयोज्यंस्पष्टोभवेद्ग्रहः ॥ १८ ॥ ॥ ॥

संस्कृतः तस्माद्ग्रंथाद्वर्षप्रवेशसमयेसाधितःसूर्यःविकलात्मकस्तुल्योभवतीतिनिश्चितम् अत्रा र्थेपूर्वमेवोदाहरणंप्रदर्शितम् अनयारीत्याद्वयोस्तुल्यताभवतीतिज्ञात्वादैवज्ञचक्रचूडामणि भिःश्रीकेशवदैवज्ञैराचार्यैर्नान्यःसंस्कारोवर्षप्रवेशसमयेऽप्युक्तःगणेशदैवज्ञैर्यदुक्तंतदसत् ॥

॥ १७ ॥ अथवर्षप्रवेशसमयेस्पष्टाग्रहाःसाध्याःतत्रापिसुखार्थपंचांगस्थितग्रहेपुचालनमाह गतैष्यदिवसैःकृत्वाग्रहस्यकलादि

कागतिर्गुण्या खषड्भिःषष्ट्याभाज्या लब्धमंशादिकंअंशकलाविकलात्मकंपंचांगस्थितग्रहेशोध्यंयोज्यंवा यदागतमंतरंस्यात्त दाशोध्यं यदात्वेप्यमंतरंस्यात्तदायोज्यम् सतात्कालिकःस्पष्टोग्रहोभवेत् वक्रगतिग्रहस्यराहुकेत्वोश्चचालनंमार्गग्रहापेक्षयावि परीतंज्ञेयम् । उदाहरणम्—वर्षप्रवेशवारादिकमध्ये २।१२।१८ अवधिस्थवारादिना ६।१३।५६ शोधितेजाताश्चालनांकाः २।५८।२२ अनेनसर्वेग्रहाश्चालिताः वर्षप्रवेशसमये तात्कालिकाःस्पष्टग्रहाः । भौमःमध्यमः ८।११।२०।१८ शी. कें.०।२५। २५।९ द. फ. ध. ४।५६।५६ द. सं. मं. ८।१६।१७।१४ मृ. कें. ७।१३।४२।४६ मृ. फ. ऋ. ८।१५।३४ सं. स्प. मं. ८।३। ४।४४ द्वि. कें. १।३।४०।४३ शी. फ. ध. १३।५।५२ स्प. मं. ८।१६।१०।३६ ग. ४८।२६ ॥ बु. कें. ८।७।४४।२२ द.फ. ऋ. १०।३६।० द. सं. बु. ८।२६।९।२७ मृ. कें. १०।३।५०।२३ मृ. फ. ऋ. ३।१०।१८ मं. स्प. बु. ९।३।३५।९ द्वि. कें. ८।१०।५४।४० फ. ऋ. २१।१२।० स्प. बु. ८।१२।२३।९ ग. ६१।८॥ ॥ गु. ९।४।८।४० कें. ०।२।३६।४७ फ. ध ०।१३।३ द. सं. गु. ९।४।२१।४३ मृ. कें. ८।२५।३८।१७। मृ. फ. ऋ. ५।३८।३० मं. गु. ८।२८।३०।१० द्वि. कें. ०।८।१५।१७ फ. ध. १।२२।३२ स्प. गु. ८।२९।५२।४२ ग. १३।२४॥ ॥ शु. कें. ८।१०।३३।४३ द. फ. ऋ. २०।३९।४३। द. शु. ८।१६।५।४४ मृ. कें. ६।१३।५४।१६। मृ. फ. ध. ०।३३।२२ मं. स्प. शु. ९।७।१८।४९ द्वि कें. ८।१०।०।२१ फ. ऋ. ४१।२७।५४ स्प. शु. ७।२५।५०।५५ ग. ७१।२॥ ॥ म. श. ५।२४।१६।२६ कें. ३।१२।२९।१ द. फ. ध. २।५१।० द. श. ५।२७।७।२६ मु. कें. ३।२।५२।३४। फ. ध. ७।५५।४८ म. श. ६।२।१२।१४ द्वि. कें. ३।४।२३।१३ स्प. श. ६।७।५४।१४।२९ एतादृशा

ग्रहाः संति तथापि अग्रेदशाया सहमकरणेच ग्रहाणां अंशालभ्यंते अतः तेएवगृहीताः ॥ १८ ॥ वर्षप्रवेशसमयेयन्नक्षत्रं भवतितस्यनक्षत्रस्यइष्टकालावधिभुक्तघटिकाःकार्याः ताःषष्ट्यागुण्याः भभोगोद्धृतंनक्षत्रस्यगतैष्ययोगेनभाज्याद्यलब्धंतत् षष्टिगुणिताश्विन्यादिगतनक्षत्रेषुयुक्तंद्विनिघ्नं ताअश्विन्यादिनक्षत्रादिष्टघटीपर्यंतंघटिकाभवंति तानवभिर्भाज्यालब्धमंशाः शेषंषष्ट्यागुण्यंनवभिर्भाज्यंलब्धंकलाः पुनःशेषंषष्ट्यागुण्यंनवभिर्भाज्यंलब्धंविकलाः एवंशशी भागपूर्वांशादिकस्तात्कालिकःस्यात् । अथगतिसाधनम् । खखाभ्राष्टवेदा ४८००० भभोगेननक्षत्रगतैष्ययोगेनभक्ताः चंद्रस्यकलादिकास्पष्टागतिः स्यात् । उदाहरणम् वर्षप्रवेशसमयेहस्तनक्षत्रं तस्यपूर्वदिनेभुक्तघटिकाः ४१।२४ एताइष्टघटीभिः १२।१८ युक्ताः इष्टघटी

अथपंचांगस्थनक्षत्राच्चंद्रानयनमाह ॥ खषट्‍ ६० घ्नंभयातंभभोगोद्धृतंतत्खतर्कघ्नधिष्ण्येषुयुक्तंद्विनिघ्नम् ॥ नवाप्तंशशीभागपूर्वस्तुभुक्तिःखखाभ्राष्टवेदा ४८००० भभोगेनभक्ताः ॥ १९ ॥ ॥

पर्यंतंहस्तनक्षत्रस्यभुक्तघटिकाःजाताः ५३।४२ एताःषष्ट्यागुणिताः ३२२२ नक्षत्रस्यगतैष्ययोगेन ५८।५२ भक्ताःसवर्णितौभाज्य १९३३२० भाजकौ ३५३२ भाजनाल्लब्धं ५४।४४।१ अश्विन्यादिगतनक्षत्रपर्यंतसंख्या १२ षष्ट्यागुणिताः ७२० पूर्वलब्ध्या ५४।४४।१ युक्ताः ७७४।४४।१ द्विगुणिताः १५४९।२८।२ नवभिर्भक्ताः लब्धंअंशादिकं १७२।९।४७ अंशास्त्रिंशता ३० भक्ताः जातस्तात्कालिकोराश्यादिचंद्रः ५।२२।९।४७ अथगत्यानयनम् । खखाभ्राष्टवेदानक्षत्रस्यगतै ॥ १७ ॥ ५८।५२ भक्तलब्धाकलादिकाचंद्रस्यस्पष्टागतिः ८१५।२४ उक्तरीत्यासाधितास्तात्कालिकस्पष्टाग्रहाः ॥ १९ ॥

कागतिर्थभिः श्लोकैर्भावसंधिसाधनमाह । तत्रलग्नसाधनमिष्टकालादिसाधनं दशमलग्नसाधनम् नतसाधनंच तत्रादौनत साधनज्ञानमाह । दिनार्धपूर्वमिष्टकालेसतिदिनखंडंदिनार्धंदिनगतघटीभिःहीनंकार्यम् तदादिनपूर्वनतंस्यात् रात्रौराञ्य र्धपूर्वमिष्टकालेसतिरात्रिखंडंरात्र्यर्धरात्रिगतघटीभिःहीनंकार्यं तदारात्रिपूर्वनतंस्यात् यदादिनार्धादुपरीष्टकालस्तदासूर्यो दयादिष्टघटीपुशुद्धंशोध्यम् द्युखंडंदिनार्धंदिवसेअपरंनतंपश्चिमनतंस्यात् तथाराञ्यर्धादुपरीष्टकालेसतिसूर्यास्तादिष्टघटीषु शोध्यम् राञ्यर्धरात्रौपश्चिमनतंस्यात् ॥ २० ॥ तात्कालिकोऽर्कः अयनांशैर्युक्तःकार्यः तस्यभुक्तभोग्यांशसंगुणादिति यदा

/ अथभावसाधनमाह ॥ पूर्वनतंस्याद्दिनरात्रिखंडंदिवानिशोरिष्टघटीविहीनम् ॥ दिवानिशोरिष्टघटी पुशुद्धंद्युरात्रिखंडंत्वपरंनतंस्यात् ॥ २० ॥ तत्कालेसायनार्कस्यभुक्तभोग्यांशसंगुणात् ॥ स्वोदया त्खाग्नि ३० लब्धंयद्भुक्तंभोग्यंरवेस्त्यजेत् ॥ २१ ॥ ॥ ॥ ॥ ॥

ऋणलग्नंसाध्यतेतदाभुक्तांशाग्राह्याः यदाधनलग्नसाधनंक्रियतेतदाभोग्यांशाग्राह्याः तैस्तैःस्वोदयोगुणनीयः त्रिंशद्भक्तः रवेर्भुक्तमथवाभोग्यंयल्लब्धंतदिष्टघटीपलेभ्यस्त्यजेत्शोधयेत् तदनंतरंशेषात्गतगम्यनिजोदयान्त्यजेत् । तद्यथा- यदाभुक्त कालःसाध्यतेतदागुणितोदयात्पृष्ठोदयाःशोध्याः यदाभोग्यकालःसाध्यतेतदागुणितोदयात्अग्रिमोदयाःशोध्याः शोधितेय च्छेषंतत्खाग्न्या ३० हतं अशुद्धेनयःशोधितोनशुद्ध्यतिसःअशुद्धोदयः तेनभक्तंफलंअंशादिकंग्राह्यं । तत् अशुद्धभेहीनं कार्यम् शुद्धभेयुक्कार्यम् । तद्यथा ऋणलग्नसाधनेधनलग्नसाधनेचमेषाद्गणनयायद्राशिसंख्यांकःअशुद्धोदयोभवतितद्राशिसं

ख्यामध्येलवादिकंहीनंयोज्यंच तदनंतरंव्ययनांशकंअयनांशकैरहितंकार्यम् तनुःलग्नंस्यात् एवमनयारीत्यालंकोदयैःकृत्वा रवेर्भुक्तंभोग्यंसाध्यम् सत्पलीकृतात्पूवपश्चिमनताच्छोध्यं अन्यदवशिष्टंयत्कर्मतत्प्राग्वत्पूर्वरीत्यासाध्यं तद्दशमंभवेत्। तद्यथा यदापूर्वनतंभवतितदापूर्वनतमिष्टकालंप्रकल्प्यलंकोदयैःकृत्वारवेर्भुक्तंशोध्यम् अन्याक्रियाऋणलग्नवत् यदापश्चिम नतंभवतितदापश्चिमनतमिष्टकालंप्रकल्प्यलंकोदयैःकृत्वारवेर्भोग्यंशोध्यम् अन्यक्रियाधनलग्नवत्कार्या तद्दशमंभवेत्। अथ लग्नदशमभावावुक्तावन्यभावसाधनमाह। सपड्भेइति। लग्नंराशिपड्कयुतंजायासप्तमभावोभवति एवंसपड्भेस्वेतुर्यश्चतुर्थ

इष्टनाडीपलेभ्यश्चगतगम्यान्निजोदयान्॥ शेपंखत्र्या ३० हतंभक्तमशुद्धेनलवादिकम् ॥ २२ ॥ अशुद्धशुद्धभेहीनयुक्तनुर्व्ययनांशकम् ॥ एवंलंकोदयैर्भुक्तंभोग्यंशोध्यंपलीकृतात् ॥ २३ ॥ पूर्व पश्चान्नतादन्यत्प्राग्वत्तद्दशमंभवेत्॥ सपड्भेलग्नखेजायातुर्यौलग्नोनतुर्यतः ॥ २४ ॥ पष्ठोंऽशयुक्त नुःसंधिरग्रेपष्ठांशयोजनात् ॥ त्रयःससंधयोभावाःपष्ठांशोनैक्युक्सुखात् ॥ २५ ॥

भावोभवति एवंभावचतुष्टयंजातम्। अथलग्नोनतुर्यतःलग्नंचतुर्थभावाच्छोध्यम् शेपस्यपष्ठांशोराश्यादिस्तेनयुक्तंतनुर्लग्नंकार्यम् सलग्नद्वितीयभावयोःसंधिःस्यात् लग्नस्यविरामसंधिःस्यात् धनभावस्यारंभसंधिरितिसर्वत्रज्ञेयम्। अग्रेपष्ठांशयोजनादिति सएवागतसंधिःतेनपष्ठांशेनयुक्तोऽग्रेद्वितीयभावःस्यात् द्वितीयभावःपष्ठांशयुक्तःद्वितीयतृतीयभावयोःसंधिःस्यात् अयंपष्ठांशयुक्तःतृतीयभावःस्यात् अयंपष्ठांशयुक्तःतृतीयचतुर्थभावयोःसंधिःस्यात् एवंत्रयःससंधयोभावाजाताः तदनंतरंअ

ग्रेत्रयःससंधयोभावाःसाध्याः तद्यथा पूर्वानीतषष्ठांशंरूपमध्येसंशोध्य अनेनराश्यादिनासुखभावोयुक्तश्चतुर्थपंचमभावयोः संधिःस्यात् अयमेवसंधिःपुनस्तेनयुक्तःपंचमभावःस्यात् अनेनयुक्तःपंचमषष्ठभावयोःसंधिःस्यात् अयंतेनयुक्तःषष्ठभावोभवति अयंतेनयुक्तःषष्ठसप्तमभावयोःसंधिःस्यात् एवंषट्ससंधयोभावाजाताः एतेभार्धयुक्ताभार्धषड्राशयःतैर्युक्ताःसंतःअवशिष्टषड्भावाः ससंधयःस्युः एवंभावसंधिनिष्पत्तिप्रयोजनमाह । खेटइति । योग्रहोयद्भावस्थोभवतिसचेद्भावस्यराश्यंशकलाविकलाभिस्तुल्यःस्यात् तदासग्रहः तद्भावस्थंशुभमशुभंवाफलंपूर्णविंशतिविश्वात्मकंददाति संधितुल्येग्रहेशून्यंफलंभवति

अग्रेत्रयःषडेवंतेभार्धयुक्ताःपरेऽपिषट् ॥ खेटेभावसमेपूर्णफलसंधिसमेतुखम् ॥ २६ ॥ भुक्तंभोग्यंस्वेष्टकालान्नशुध्येत्रिंश ३० न्निघ्नात्स्वोदयाप्तंलवाद्यम् ॥ हीनंयुक्तंभास्करेतत्तनुःस्याद्रात्रौलग्नंभार्धयुक्ताद्रवेस्तु ॥ २७ ॥ ॥ ॥ ॥ ॥

॥२१॥२२॥२३॥२४॥२५॥२६॥ अथसूर्यस्यभुक्तमथवाभोग्यं उक्तरीत्याचानीतंयद्यदिष्टकालघटीपलेभ्योनशुद्ध्येत् तदा केनोपायेनलग्नसाधनंकर्तव्यमित्यतआह भुक्तमिति भुक्तंभोग्यंयदेष्टकालनाडीपलेभ्योनशुद्ध्येत् तदाइष्टनाडीपलानित्रिंशद्गुणितानिकार्याणि सायनसूर्यस्यराश्युदयेनभाज्यानि फलंलवाद्यंग्राह्यम् तत्हीनंयुक्तंभास्करेकार्यं तद्यथा यदारवेर्भुक्तमानीतंभवति तदालवाद्यंफलंसूर्यमध्येहीनंकार्यम् यदाभोग्यमानीतंभवतितदालवाद्यंफलंसूर्यमध्येयुक्तंकार्यम् तत्तनुःलग्नंस्यात् । रात्रौलग्नसाधनंचेत्क्रियतेतदाराशिषट्कयुक्ताद्रवेःसकाशाल्लग्नंसाध्यम् रात्रौदशमलग्नसाधनेऽपिराशिषट्कयुक्ताद्रवेःसकाशाद्धु

क्रभोग्यंसाध्यम् अत्रोदाहरणम् अस्यजन्मभूमावुदयाः तात्कालिकोऽर्कः ९।७।२०।६ अयनांशैः १८।२६ युक्तः ९।२५।५६।६ अस्यभोग्यांशैः ४।३।५४ मकरराशेरुदयो २९८ गुणितः १२११ ।२२।१२। अयंत्रिंश ३० ह्रक्तः जातोभोग्यकालः ४०।२२।४४ अयमिष्टनाडी १२।१८।३० पले भ्यः ७३८।३० शोधितः शेषं ६९८।७।१६ मकरादग्रेकुंभोदयः २३९ शेषाच्छोधितेशेषम् ४५९ ।७।१६ कुंभादग्रेमीनोदयः २०३ शेषाच्छोधितेशेषम् २५६।७।१६ मीनादग्रेमेषोदयः २०३ शे

**जन्मभूम्यावुदयचक्रं.**

| | | |
|---|---|---|
| मे | २०३ | मी |
| वृ | २३९ | कुं |
| मि | २९८ | म |
| क | ३४८ | ध |
| सिं | ३५९ | वृ |
| क | ३५३ | तु |

पाच्छोधितेशेषम् ५३।३७।१६ मेषादग्रेवृषभोदयः २३९ अयंशेषात् ५३।३७।१६ नशुद्ध्यतिअतः शेषम् ५३।७।१६ खत्र्या ३० हतं १५९३।३८ अशुद्धोदयेन२३९भक्तंलब्धं अंशादिकम् ६।४०।४ इदमशुद्धात्पूर्वमेषाद्गणनयाएकोराशिस्तेनयुक्तं १।६।४०।४ इदंअयनांशैः १८।२६ हीनं जातंलग्नं ०।१८।१४।४ राशिषट्कयुतंजातंजायाभवनम् ६।१८।१४।४ अथदशमलग्नस्योदाहरणम् तत्रलंको दयाः दिनार्धम् १२।४४ दिनगतघटीभिः१२।१८।३० हीनंजातं पूर्वनतं ०।२५।३० अयमिष्टकालः

**लंकोदयचक्रम्.**

| | | |
|---|---|---|
| मे | २७८ | मी |
| वृ | २९९ | कुं |
| मि | ३२३ | म |
| क | ३२३ | ध |
| सिं | २९९ | वृ |
| क | २७८ | तु |

लंकोदयैः कृत्वासायनांशसूर्यस्यभुक्तभागागुणनीयाः उपरितनांकः त्रिंशद्धृतः लब्धंभुक्तकालःजातोभुक्तकालः २७९।१४।० अयंघटीपलेभ्यः २५।३० नशुद्ध्यति अतःशेषं २५।३० त्रिंशद्गुणितं ७६५ स्वोदयेन ३२३ भक्तं फलंलवादिकं २।२२।६ इदंराश्यादिसूर्यमध्ये ९।७।२०।६ हीनंजातं ९।५।८।० इदंराशिषट्कयुतं जातंसुखभवनं ३।५।८।० लग्नहीनचतुर्थभावस्यशे षं २।१६।५३।५६ इदं षड्भक्तंलब्धंराश्यादि ०।१२।४८।५९।२० अनेनयुक्तंलग्नंजातोलग्नस्यविरामसंधिः १।१।३।३ अयं

पष्ठांशेनयुतोजातोद्वितीयभावः १।१३।५२।२ अयंपष्ठांशेनयुतोजातोद्वितीयभावस्यसंधिः १।२६।४१।२ अयं पष्ठांशेनयुतो जातस्तृतीयभावः २।९।३०।१ अयंपष्ठांशेनयुतोजातस्तृतीयभावस्यसंधिः २।२२।१९।० प्रागानीतपष्ठांशः ०।१२।४८।५९ अयंरूपाच्छोधितःशेषं ०।१७।११।०।४० अनेनसुखभावोयुक्तःजातःसुखभावस्यसंधिः ३।२२।१९।० अयंतेनयुक्तःजातःपंचमभावः ४।९।३०।१ अयंतेनयुक्तःजातःपंचमभावस्यसंधिः ४।२६।४१।२ अयंतेनयुक्तःजातःषष्ठभावः ५।१३।५२।२ अयं तेनयुक्तःजातोरिपुभावस्यसंधिः ६।१।३।३ एतेराशिषट्कयुक्ताः अवशिष्टाःससंधयोभावाजाताःसर्वेएकत्रलिख्यंते ॥ २७ ॥

तन्वादिद्वादशभावाः ससंधयः स्युः

| त. | ध. | स. | सु. | सु. | रि. | जा. | मृ. | ध. | क. | आ. | व्य. |
|---|---|---|---|---|---|---|---|---|---|---|---|
| ० | १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० | ११ |
| १८ | १३ | ९ | ५ | ९ | १३ | १८ | १३ | ९ | ५ | ९ | १३ |
| १७ | ५२ | ३० | ८ | ३० | ५२ | १४ | ५२ | ३० | ८ | ३० | ५२ |
| ४ | २ | १ | ० | १ | २ | ४ | २ | १ | ० | १ | २ |
| **स.** | **स.** | **सं.** | **सं.** | **सं.** | **स.** | **स.** | **सं.** | **सं.** | **स.** | **सं.** | **सं.** |
| १ | १ | २ | ३ | ४ | ६ | ७ | ७ | ८ | ९ | १० | ३ |
| १ | २६ | २२ | २२ | २६ | १ | १ | २६ | २२ | २२ | २६ | ० |
| ३ | ४१ | १९ | १९ | ४१ | ३ | ३ | ४१ | १९ | १९ | ४१ | ३ |
| ३ | २ | ० | ० | २ | ३ | ३ | २ | ० | ० | २ | ३ |

लग्नकुंडली.

२ १२ रा. ३ लग्नं. १ ११ ४ १० सू. ९ ५ श. ७ के बु गु म. चं. ६ शु. ८

भावकुंडली.

२ १२ ३ भावः १ ११ रा. ४ के. गु.सू. १० मं. ५ श. ७ बु. ९ चं. ६ शु. ८

अथभावस्थग्रहफलम् ॥ खेटेसंधिद्वयांतस्थेइति ॥ तद्यथा ग्रहे आरंभसंधेःसकाशात्अधिकेसति विरामसंधेःसकाशात् न्यूनेसतितदाग्रहोयस्मिन्भावेवर्ततेतद्भावजंफलंभवेत् द्विसंधिभ्यांहीनेऽधिकेग्रहेसति पूर्वापरभावेफलंभवेत् तद्यथा आरंभसंधेःसकाशात्ग्रहेहीनेसति यद्भावोवर्ततेतद्भावात्पूर्वभावस्यफलंददाति यदाविरामसंधेःसकाशाद्ग्रहोऽधिकोभवति. तदा अग्रिमभावस्यफलंददाति ॥२८॥ अथग्रहाणांविंशोपकात्मकंभावफलमाह उदाहरणमेवव्याख्या सूर्यः ९।७।२०।६ अस्य

अथ द्रेष्काणचक्रंलिख्यते.

| श्री | मे | वृ | मि | क | सिं | क | तु | वृ | ध | म | कु | मी |
|---|---|---|---|---|---|---|---|---|---|---|---|---|
| १० | मं | शु | गु | शु | श | र | चं | मं | बु | गु | शु | श |
| २० | र | चं | मं | बु | गु | शु | श | र | चं | मं | बु | गु |
| ३० | श | श | र | चं | मं | बु | गु | शु | श | र | चं | मं |

खेटेसंधिद्वयांतस्थेफलंतद्भावजंभवेत् ॥ हीनेऽधिकेद्विसंधिभ्यांभावेपूर्वापरेफलम् ॥ २८ ॥ ग्रहसंध्यंतरंकार्यंविंशत्या २० गुणितंभजेत् ॥ भावसंध्यंतरेणाप्तंफलंविंशोपकाःस्मृताः ॥ २९ ॥ भौमोशनःसौम्यशशीनवितसितारेज्यार्किमंदांगिरसोग्रहेश्वराः ॥ आद्याःकुजाद्यारवितोऽपिमध्यमाःसितात्तृतीयाःक्रियतोद्दकाणपाः ॥ ३० ॥ ॥

संधिः ९।२२।१८।२३ अनयोरंतरं १४।४८।१७ विंशत्या २० गुणितं २९६।५।४०। भावः ९।५।८।० संधिः ९।२२।१८।२३ अनयोरंतरेण १७।१०।२३ भजेत् अथसवर्णितोभाज्यः १०६५९४० भाजकः ६१८२३ भाजकेनहृतेभाज्ये यदाप्तंफलंतदेवविंशोपकाःस्मृताः १७।१४ एवंचंद्रादीनाम् । इतिरव्यादीनांविंशोपकात्मकानिभावफलानि ॥२९॥ अथग्रहाणांबलाबलंवक्ष्यति । तच्चग्रहबलमधिकारंविनान अतस्तद्बलसाधनायादौराशीशद्रेकाणेशानाह । भौमेति । मेषस्यभौमः वृषस्यो

शनाशुक्रः मिथुनस्यसौम्योबुधः कर्कस्यशशीचंद्रः सिंहस्यइनःरविः कन्यायाःवित्बुधः तुलायाःसितःशुक्रः वृश्चिकस्यारो भौमः धनुषःइज्योगुरुः मकरस्यार्किःशनिः कुंभस्यमंदःशनिः मीनस्यांगिराःगुरुः एतेग्रहेश्वराःद्वादश राशिस्वामिनोभवंति । अथद्रेकाणस्वामिनउच्यंते । आद्याइति । राशेस्तृतीयांशोदशांशात्मकोद्रेक्काणउच्यते । एकस्मिन्राशौत्रयोद्रेक्काणा अतः एकस्मिन्राशौकियत्संख्याकोद्रेक्काणोस्तीतिविचार्यः प्रथमश्चेत्तर्हिभौमात् द्वितीयश्चेद्रवेः तृतीयश्चेच्छुक्रात् अनया रीत्याक्रियतः मेषादिद्वादशराशिषुद्रेक्काणपाःद्रेक्काणस्वामिनोभवंति । इतिद्रेक्काणचक्रम् ॥ २० ॥ अथग्रहाणामुच्चनीचरा

अथ ग्रहाणामुच्चनीचानि.

| र | च | मं | बु | गु | शु | श | ग्रह |
|---|---|---|---|---|---|---|---|
| ०<br>१० | १<br>३ | ९<br>२८ | ५<br>१५ | ३<br>५ | ११<br>२७ | ६<br>२० | उच्च. |
| १६<br>१० | ७<br>३ | ३<br>२८ | ११<br>१५ | ९<br>५ | ५<br>२७ | ०<br>२० | नीच. |

सूर्यादितुंगर्क्षमजोक्षनक्रकन्याकुलीरांत्यतुलालवैःस्युः॥
दिग्भिर्गुणैरष्टयमैःशरैकैर्भूतैर्भसंख्यैर्नखसंमितैश्च ॥३१॥

अथाद्यचक्रम्

| मे | म | तु | क |
|---|---|---|---|
| मे | वृ | मि | क |
| सिं | क | तु | वृ |
| ध | म | कुं | मी |

शीन् भागांश्चाह । सूर्यादीति । सूर्यादीनांग्रहाणांतुंगर्क्षंउच्चराशयःस्युः सूर्यस्यअजःमेषःउच्चंदिग्भिर्दशभिरंशैः चंद्रस्यउक्षा वृषःउच्चंगुणैस्त्रिभिरंशैः भौमस्यनक्रोमकरःउच्चंअष्टयमैरष्टाविंशतिभिरंशैः बुधस्य कन्याउच्चंशरैकैःपंचदशभिरंशैः गुरोः कुलीरःकर्कःउच्चंभूतैःपंचभिरंशैः शुक्रस्यांत्योमीनःउच्चंभसंख्यैःसप्तविंशतिभिरंशैः शनेस्तुलाउच्चं नखसंमितैर्विंशतिभिरंशैः परमोच्चमितिसर्वत्रज्ञेयं । इत्युच्चानि ॥ २१ ॥ ॥ ॥ ॥

अथग्रहाणांनीचस्थानम् ॥ उच्चबलानयनंनवांशस्वामिनश्चाह। तदिति । तेषांसूर्याद्युच्चराशीनांसप्तमस्तुलादिकोराशिर्नीचम् अंशाश्चतएव यथा सूर्यस्यतुलानीचंदशभिरंशैःपरमंनीचमितिसर्वत्रपूर्ववत् एवंचंद्रादीनामपिज्ञेयम् । अथोच्चबलम् । अनेननीचेनग्रहोहीनःकार्यः चेद्रसभादधिकःषडधिकः तदाचक्राद्द्वादशराशिभ्यःशोध्यः शेषस्यांशाःकार्याः नवभिर्भाज्याः लब्धंकलादिउच्चबलंस्यात् इत्युच्चबलम् । अथवांशेशाउच्यंते । क्रियोमेषः एणोमकरः तौलिस्तुला इंदुभंकर्कः एतेमेषादिराशीनांत्रिरावृत्त्याआद्याःभवंति तद्यथा मेषसिंहधनूराशीनामाद्योमेषः वृषकन्यामकरराशीनामाद्योमकरःमिथुन

| अथ मेषादिराशिविभागयुक्ता हद्देशाः | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|
| मे | वृ | मि | क | सिं | क | तु | वृ | ध | म | कुं | मी |
| गु ६ | शु ८ | बु ६ | मं ७ | गु ६ | बु ७ | श ६ | मं ७ | गु १२ | बु ७ | बु ७ | शु १२ |
| शु ६ | बु ६ | शु ६ | शु ६ | शु ५ | शु १० | बु ८ | शु ४ | शु ५ | गु ४ | बु ६ | गु ४ |
| बु ८ | गु ८ | गु ५ | गु ६ | श ७ | गु ४ | गु ७ | बु ८ | बु ४ | शु ८ | गु ७ | बु ३ |
| मं ५ | श ५ | मं ७ | बु ७ | बु ६ | मं ७ | शु ७ | गु ५ | मं ५ | श ४ | मं ५ | मं ९ |
| श ५ | मं ३ | श ६ | श ४ | मं ६ | श २ | मं २ | श ६ | श ४ | मं ४ | श ५ | श २ |

तत्सप्तमंनीचमनेनहीनोग्रहोधिकश्चेद्रस भाद्विशोध्यः॥ चक्रात्तदंकांशैर्लवोबलं स्यात्क्रियैणतौलींदुभतोनवांशाः॥३२॥ मेषेंगतर्काष्टशरेषुभागाजीवास्फुजिज्ज्ञार शनैश्चराणाम्॥ वृषेष्टषण्णागशराऽनलांशाःशुक्रज्ञजीवार्किकुजेशहद्दाः॥ ३३ ॥

तुलाकुंभराशीनामाद्यातुला कर्कवृश्चिकमीनराशीनामाद्यःकर्कः। अत्रराशिस्वामिनएवनवांशस्वामिनइत्यर्थः। इत्याद्यचक्रम् ॥ ३२ ॥ अथषड्भिःश्लोकैर्मेषादिद्वादशराशिषुहद्देशानाह । अंकस्थापनमेवव्याख्या । सायथा । मेषराशौप्रथमषडंशानां

जीवोगुरुः ततःपडंशानामास्फुजिच्छुक्रः ततोऽष्टानामंशानांज्ञोबुधः ततःपंचांशानामारोभौमः ततःपंचांशानांशनैश्वरःस्वामीएवमेववृपादिष्वपिज्ञेयम् । इतिहद्देशचक्रम् ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥ ३८ ॥ अथपंचवर्गीबलमाह । त्रिं

युग्मेपडंगेपुनगांगभागाःसौम्यास्फुजिज्जीवकुजार्किहद्दाः ॥ कर्केंद्रितकांगनगाब्धिभागाःकुजास्फुजिज्ज्ञेज्यशनैश्चराणाम् ॥ ३४ ॥ सिंहेंगभूताद्रिरसांगभागादेवेज्यशुक्रार्किबुधारहद्दाः ॥ स्त्रियोनगाशाब्धिनगाक्षिभागाःसौम्योशनोजीवकुजार्किनाथाः॥३५॥ तुलेरसाष्टाद्रिनगाक्षिभागाःकोणज्ञजीवास्फुजिदारनाथाः॥कीटेनगाब्ध्यष्टशरांगभागाभौमास्फुजिज्ज्ञेज्यशनैश्चराणाम्॥६॥ चापेरवीष्वंबुधिपंचवेदाजीवास्फुजिज्ज्ञारशनैश्चराणाम् ॥ मृगेनगाब्ध्यष्टयुगश्रुतीनांसौम्येज्यशुक्रार्किकुजेशहद्दाः ॥ ३७ ॥ कुंभेनगांगाद्रिशरेपुभागाःशुक्रज्ञजीवारशनैश्चराणाम् ॥ मीनेऽर्कवेदाऽनलनंदपक्षाःसितेज्यसौम्यारशनैश्चराणाम् ॥ ३८ ॥ त्रिंशत्स्वभेविंशतिरात्मतुंगेहद्देक्षचंद्रादशकंद्दकाणे ॥ मुसल्लहेपंचलवाःप्रदिष्टाविंशोपकावेदलवैःप्रकल्प्याः ॥ ३९ ॥ ॥

शत्स्वभइति । स्वभेस्वराशौग्रहे ३० त्रिंशल्लवाःबलम् स्वोच्चस्थे २० विंशतिर्बलम् स्वहद्दास्थे १५ पंचदशबलम् स्वद्दकाणस्थे १० दशबलम् मुसल्लहेस्वनवांशे ५ पंचलवाःप्रदिष्टाउक्ताः वेदलवैःबलस्यचतुर्थांशोविंशोपकाःप्रकल्प्याः ॥ ३९ ॥

८७।२०।६ नवभिर्भक्ताः जातंसूर्योच्चवलम्९।४२ अथहद्देशवलम्। मकरराशौसूर्यस्यसप्तांशाःत्रिंशत्कलाःविद्यंते मकरराशौ हद्दायां आदौसप्तांशाः अयंसप्ताधिकोऽग्रिमसप्तमध्येवर्ततेइतिकारणात् जातो हद्देशोगुरुः अयंसूर्यस्यसमोभवति समहद्दायांप्राप्तंवलम् ७।३० अथत्रैराशिकवलम् मकरराशौप्रथमदशकमध्येवर्ततेतदीशोगुरुः अस्यसमत्वात्प्राप्तंत्रैराशिकवलम् ५।०

अथ पंचवर्गीचक्रंलिख्यते.

| ग्र | धी | स्व | मि | स | श |
|---|---|---|---|---|---|
| मि | गृ | ३० ० | २२ ३० | १५ ० | ७ ३० |
| स | ह | १५ ० | ११ १५ | ७ ३० | ३ ४५ |
| श | त्र | १० ० | ७ ३० | ५ ० | २ ३० |
| नवांशः | मु | ५ ० | ३ ४५ | २ ३० | १ १५ |

क्षेत्रंहोरात्र्यब्धिपंचांगसप्तवस्वंकांशेशार्कभागाःसुधीभिः॥ विज्ञातव्यालग्नसंस्थाः शुभानांवर्गाःश्रेष्ठाःपापवर्गास्त्वनिष्टाः ॥ ४१ ॥

अथ मित्रादिचक्रंलिख्यते.

| सू | चं | मं | बु | गु | शु | श | |
|---|---|---|---|---|---|---|---|
| चं | सू शु | श | श | श | चं सू | मं बु गु | मि |
| मं बु गु | श | सू शु | सू शु | सू शु | मं बु गु श | चं शु | स |
| श | मं बु गु | चं बु गु | चं मं गु | चं मं शु | ० | सू | श |

अथमुसलहद्दवलम्। नवांशगणनयाजातोमुसलहेशोगुरुः अस्यसमत्वात्प्राप्तंनवांशवलम् २।३० पंचानांयोगः ३२।१२ चतुर्भिर्भक्तः जातंसूर्यस्यविश्वात्मकंवलम् ८।३ एवमेवचंद्रादीनामपिज्ञेयम् ॥४०॥ अथद्वादशवर्गीचक्रमाह। क्षेत्रमिति। क्षेत्रंगृहम् होरा त्रिलवः चतुर्लवः पंचलवः षड्लवः सप्तलवः अष्टलवः अंकलवः दशलवः एकादशलवः द्वादशलवः एतेद्वादश

यदाग्रहःस्वगृहस्वोच्चस्वहद्दास्वद्रेष्काणनवांशेषुपंचस्वधिकारेषुकुत्रापिनास्तितदाबलमाह । स्वस्वाधिकारेइति । स्वस्वाधिकारोक्तबलस्यविभागःसुहृद्भेमित्रगृहेपादोनंचतुर्थांशोनंबलंग्राह्यम् समभेसमस्यगृहेअर्धम् अरिभेशत्रुगृहेंघ्रिश्चतुर्थांशोबलं स्यात् तद्यथा ग्रहस्यस्वगृहे ३० त्रिंशल्लवाःबलंस्यात् मित्रगृहेपादोनंसार्धद्वाविंशतिः २२।३० जाताः समभेऽर्धपंचदश १५ जाताः शत्रुगृहेचतुर्थांशःसार्धाःसप्त ७।३० जाताः तथा स्वहद्दायांपंचदश १५ लवाबलम् मित्रहद्दायां सपादाः एकादश ११।१५ जाताः । समहद्दायांसार्धाःसप्त ७।३० शत्रुहद्दायांपादोनाश्चत्वारः ३।४५ तथास्वद्रेष्काणेदश १० लवाबलम् मित्र द्रेष्काणेसार्धाःसप्त ७।३० समद्रेष्काणेपंच ५ शत्रुद्रेष्काणेसार्धद्वयं २।३० एवंस्वनवांशेपंच ५ लवाबलम् मित्रनवांशेपादोनाश्च

स्वस्वाधिकारोक्तबलंसुहृद्भेपादोनमर्धंसमभेरिभेंघ्रिः ॥
एवंसमानीयबलंतदैक्येवेदोद्धृतेहीनबलःशरोनः ॥ ४० ॥

त्वारः ३।४५ समनवांशेसार्धद्वयं २।३० शत्रुनवांशेसपादमेकं १।१५ बलंस्यात् एवंपंचवर्गीबलंसमानीय तदैक्येपंचानांयोगे वेदोद्धृते चतुर्भिर्भक्तेयल्लब्धंतद्विंशोपकात्मकंग्रहाणांबलंभवति शरोनःपंचभ्योन्यूनःहीनबलोग्रहोज्ञेयः । उक्तंच । पंचाल्पो हीनवीर्यः स्यादधिकोमध्यउच्यते ॥ दशाधिकोबलीप्रोक्तःपंचवर्गीबलादिदम् ॥ अथक्रमप्राप्तमुदाहरणप्रदर्शनार्थंवक्ष्यमाण मित्रसमशत्रवोलिख्यंते । उदाहरणम् । सूर्यः ९।७।३०।६ अस्यमकरराशौस्थितत्वाद्गृहेशः शनिः अयंसूर्यस्यशत्रुः अतःकारणात्गृहेप्राप्तंबलंसार्धाःसप्त ७।३० अथोच्चबलम् । सूर्यस्यनीचम् ६।१० अनेनहीनोरविः २।२७।३०।६ अस्यांशाः

अथपंचमांशेशद्वादशांशेशानाह । ओजर्क्षेइति । पंचमांशप्रमाणंपडंशाः ६ एवंराशौपंचभवंति तत्रौजर्क्षेविपमराशौ प्रथमपं चमांशस्वामीकुजः द्वितीयपंचमांशस्वामीआर्किःशनिः तृतीयपंचमांशस्वामीईज्योगुरुः चतुर्थपंचमांशस्वामीज्ञोवुधःपंच मपंचमांशस्वामीभार्गवः शुक्रः । समभेसमराशौव्यत्ययाद्विपरीताज्ञेयाः । तद्यथा । समराशौप्रथमपंचमांशस्वामीशुक्रः द्विती यपंचमांशस्वामीवुधः तृतीयपंचमांशस्वामीगुरुः चतुर्थपंचमांशस्वामीशनिः पंचमपंचमांशस्वामीभौमः । अथद्वादशांशस्वामि नउच्यंते । द्वादशांशाः स्वभात्स्वराशेःसकाशात्स्मृताः । तद्यथा । द्वादशांशप्रमाणंसार्धमंशद्वयं २।३० एवंराशौद्वादशभ

ओजर्क्षेपंचमांशेशाःकुजार्कीज्यज्ञभार्गवाः ॥ समभेव्यत्ययाज्ज्ञेयाद्वादशांशाःस्वभात्स्मृताः ॥ ४३ ॥ लवीकृतोव्योमचरोंगशैलवस्वंकदिग्रुद्रगुणाःखरामैः ॥ भक्तोगतास्तर्कनगाष्टनंददिग्रुद्रभागाःकुयुताःक्रियात्स्युः ॥ ४४ ॥ ॥ ॥

वंति । तेयथा । एतत्प्रमाणेनयत्संख्येंशेग्रहस्तिष्ठति स्वराशितस्तत्संख्यराशेर्द्वादशांशेशोज्ञेयः ॥ ४३ ॥ अथषड्सप्ताष्टनव दशैकादशांशेशानयनमाह । लवीकृतइति । व्योमचरोग्रहोलवीकृतःयथाराशयस्त्रिंशद्गुणिताः अधःस्थितांशयुताः एवंग्रहों ऽशात्मकःकार्यः षड्स्थानेस्थाप्यः क्रमेण अंग ६ शैल ७ वसु ८ अंक ९ दिक् १० रुद्र ११ गुणाः सतत्रखरामैः ३० त्रिंश ताभक्तोयल्लब्धंतेगतास्तर्कनगाष्टनंददिग्रुद्रभागाभवंति एतेकुयुताःएकयुक्ताःसंतः क्रियान्मेपमारभ्यगणनायांयत्रविश्रांतिः तद्राशिस्वामीतद्वर्गस्यज्ञेयः एकयुक्तलब्धंयदिद्वादशाधिकंभवतितदाद्वादशभिः १२ तष्टंकार्यम् उदाहरणम् सूर्यः ९।७

भागाः लग्नसंस्था लग्नसमयेविद्यमानग्रहाणांसुधीभिःविज्ञातव्याः। शुभानांशुभग्रहाण.वर्गाः श्रेष्ठाः शुभफलदाज्ञेयाः। पापग्रहाणांवर्गाश्चेत्स्युः तदाअनिष्टाः दुष्टफलदाज्ञेयाः ॥ ४१ ॥ अथहोराद्रेक्काणतुर्यांशानामधीशानाह तत्रादौहोरेशानाह । ओजेइति । ओजेविषमराशौगृहार्धपंचदशभागाःतत्प्रमितेतत्प्रमाणे रवींद्वोर्होरे विचिंत्येज्ञेये । तद्यथा विषमराशौ । प्रथमपंचदशभागमध्येसूर्यस्यतदनंतरंचंद्रस्य । तथासमेसमराशौ चंद्ररव्योर्विचिंत्ये ॥ अथद्रेक्काणेशाउच्यंते । राशेस्त्रिभागोदशांशपरिमितोद्रेक्काणोज्ञेयः यस्यद्रेक्काणविचारःक्रियते सचेत्प्रथमविभागमध्येतदासयस्मिन्राशौतिष्ठति तद्राशिस्वामिनएवद्रेक्काणाधीशत्वम् । द्वितीयद्रेक्काणश्चेत्तदास्वराशितःपंचमोयोराशिस्तत्स्वामिनएवद्रेक्काणेशत्वम् । तथा तृतीयद्रेक्काण

**ओजेरवींद्वोःसमइंदुरव्योर्होरेगृहार्धप्रमितेविचिंत्ये ॥ द्रेक्काणपाःस्वेपुलवर्क्षनाथास्तुर्यांशपाः स्वर्क्षजकेंद्रनाथाः ॥ ४२ ॥ ॥ ॥ ॥**

श्चेत्तदास्वराशेःसकाशान्नवमोयोराशिः तत्स्वामिनएवद्रेक्काणाधीशत्वम् ॥ अथतुर्यांशस्वामिनउच्यंते । स्वर्क्षजकेंद्रनाथाइति ॥ स्वर्क्षग्रहाधिष्ठितोयोराशिस्तस्माज्जातानिकेंद्राणितन्नाथाः चतुर्थांशस्वामिनः । तद्यथा । राशेस्त्रिंशदंशास्तस्यचतुर्थांशः सार्धाःसप्त ७।३० तत्रप्रथमविभागमध्ये ७।३० स्वर्क्षस्वराशिस्वामिनएवाधिपत्यं । द्वितीयविभागमध्ये १५।० केंद्रनाथः स्वराशेःसकाशात् स्वचतुर्थोयोराशिः तत्स्वामिनएवाधिपत्यं । तृतीयविभागमध्ये २२।३० स्वराशेः सकाशात् सप्तमो यो राशिः तत्स्वामिनएवाधिपत्यं चतुर्थविभागमध्ये ३० स्वराशेः सकाशाद्दशमोयोराशिः तत्स्वामिनएवाधिपत्यम् ॥ ४२ ॥



---

१ विषमराशौ पूर्वपरार्धभागस्य होरयोरीशौरवींदू तथासमराशौपूर्वपरार्धभागस्यहोरयोरीशौ इंदुरवीइति ज्ञेयम्। २प्रथमचतुर्थसप्तमदशमानिइति।

काःलब्धं ७४ कुयुतं ७५ ॥ द्वादशभि १२ स्तष्टं शेषं ३ मेषाद्गणनयाजातोमिथुनराशिः तत्स्वामीबुधः एवमष्टमांशस्वामी बुधः । अथनवांशः। अंशाः २७७।३०।६ नवभिर्गुणिताः २४९७।३०।५४ त्रिंशद्भक्ताः लब्धं ८३ कुयुतं ८४ द्वादशभि १२ स्तष्टं शेषं० मेषाद्गणनयाजातोमीनराशिःतत्स्वामीगुरुः एवंजातोनवांशस्वामीगुरुः । अथदशांशः। अंशाः २७७।३०।६ दशभिर्गुणिताः २७७५।१।० त्रिंशद्भक्ताः लब्धं ९२ कुयुतं ९३ द्वादशभि १२ स्तष्टं शेषं ९ शेषाद्गणनयाजातोधनराशिः तत्स्वामीगुरुःएवंजातोदशांशस्वामीगुरुः । अथैकादशांशः। अंशाः २७७।३०।६ एकादशभिर्गुणिताः ३०५२।३१।६ त्रिंशद्भक्ताः लब्धं १०१ कुयुतं १०२ द्वादशभिस्तष्टं शेषं ६ मेषाद्गणनयाजातःकन्याराशिः तत्स्वामीबुधः एवंजातःएकादशस्वामी

## एवंद्वादशवर्गीस्याद्ग्रहाणांबलसिद्धये ॥ स्वोच्चमित्रशुभाश्रेष्ठानीचारिक्रूरतोऽशुभा ॥ ४५ ॥

बुधः । अथद्वादशांशः। एवंद्वादशांशविभागगणनयाचतुर्थविभागमध्येवर्ततेअतःकारणात्मकराद्गणनयाजातश्चतुर्थोमेषराशिः तत्स्वामीभौमः एवंजातोद्वादशांशस्वामीभौमः एवंचंद्रादीनामपिज्ञेयम् ॥ ४४ ॥ अथद्वादशवर्ग्युपसंहारंतत्फलंचाह एवमिति । एवंग्रहाणांबलसिद्धयेद्वादशवर्गीस्यात् साद्वादशवर्गीस्वोच्चमित्रशुभाश्रेष्ठा नीचारिक्रूरतोअशुभाच । तद्यथा । यस्यग्रहस्यद्वादशवर्गींक्रियते सचेत्स्वगृहादिषु अथवास्वोच्चवर्गे अथवा शुभग्रहस्यवर्गेतिष्ठति तदाश्रेष्ठा शुभफलदात्री । तथा सग्रहोयदिनीचवर्गे अथवाशत्रुवर्गे अथवापापग्रहस्यवर्गेवातिष्ठतितदाअशुभादुष्टफलदात्री ॥ ४५ ॥ ॥

एतत्पंचवर्गीबलचक्रंलिख्यते.

| ग्रहाः | सूर्यः | चंद्रः | भौमः | बुधः | गुरुः | शुक्रः | शनिः | ग्रहाः |
|---|---|---|---|---|---|---|---|---|
| गृ० | ७ ३० | ७ ३० | ७ ३० | ७ ३० | ३० ० | १५ ० | १५ ० | गृ० |
| उ० | ९ ४३ | ४ ३२ | १५ १० | १० १८ | ० ३६ | ६ २३ | १८ ३२ | उ० |
| हो० | ७ ३० | ३ ४५ | ७ ३० | ७ ३० | ११ १५ | ७ ३० | ११ १५ | हो० |
| त्रे० | ५ ० | २ ३० | २ ३० | २ ३० | ७ ३० | १० ० | ५ ० | त्रे० |
| मु० | २ ३० | ५ ० | २ ३० | १ १५ | ५ ० | २ ३० | ३ ४५ | मु० |
| यो० | ३२ १३ | २३ १७ | ३५ १० | २९ ३ | ५४ २१ | ४१ २३ | ५३ ३२ | यो० |
| वि० | ८ २ | ५ ४९ | ८ ४७ | ७ १५ | १३ ३५ | १० २० | १३ २९ | वि० |

३०।६ एतस्यमकरराशौस्थितत्वात्गृहेशःशनिः ॥ अथहोरा मक रराशौप्रथमपंचदशभागमध्येऽस्ति अतोहोरेशःचंद्रः । अत्रत्रिलवः सूर्यः प्रथमभागमध्येऽस्ति अतोद्रेकाणाधीशःशनिः । अथचतुर्लवः। सूर्योद्वितीयचतुर्थांशमध्येवर्तते अतःकारणात्मकरराशेःसकाशात् चतुर्थोराशिर्मेषः तत्स्वामीभौमः एवंचतुर्लवस्वामीभौमः । अथपंच मांशः।सूर्यः समराशौद्वितीयविभागमध्येवर्तते अतःपंचमांशस्वामी बुधः । अथषडंशः । सूर्यस्यांशाः २७७।२०।६ षड्गुणिताः जाता १६६५।३६ त्रिंशद्भक्ताःलब्धं ५५ कु १ युक्तं५६ द्वादशभि १२ स्तष्टं शेषं ८ मेषाद्गणनयाजातोवृश्चिकराशिः तत्स्वामीभौमः एवंजातःषडंशस्वामीभौमः । अथसप्तांशः। अंशाः २७७।२०।६ सप्तभिर्गुणिताः १९४२।२०।४२ त्रिंशद्भक्ताः लब्धं ६४ कुयुक्तं ६५ द्वादशभि १२ स्तष्टंशेषं ५ मेषाद्गणनयाजातः सिंहराशिः तत्स्वामीसूर्यः एवंजातःसप्तांशस्वामीसूर्यः । अथाष्टांशः। अंशाः २७७।२०।६ अष्टभिर्गुणिताः २२२०।०।४८ त्रिंशद्भ

शुभफलदः । शुभखेचरश्चेत् । तद्यथा । यस्यग्रहस्यद्वादशवर्गिकाक्रियतेसयदिशुभग्रहोभवतिद्वादशवर्ग्याशुभग्रहाधिकवर्ग प्राप्तोभवति तदाऽतिसौम्यः अत्यंतशुभफलदाता । सौम्योऽपिपापाधिकवर्गयोगान्नेष्टः । तद्यथा यस्यद्वादशवर्गिका क्रियते सयदिशुभग्रहोभवति द्वादशवर्ग्यांपापग्रहाधिकवर्गप्राप्तोभवति तदानेष्टः अशुभफलदः पापखेटः । तद्यथा यस्यद्वादशवर्गिकाक्रियतेसयदिपापग्रहोभवति द्वादशवर्ग्यांपापग्रहाधिकवर्गप्राप्तोभवति तदाअतिनिंद्यः अत्यंतदुष्टफ लदाता ॥ ४७ ॥ अथद्वादशभावानांशुभाशुभफलमाह । राशीशेति । तनोर्लग्नस्याप्यनयैवरीत्याशुभग्रहाधिकवर्गशा

राशीशमित्रोच्चरिपुक्रमेणचिंत्यंतनोरप्यनयैवरीत्या ॥ भावेपुसर्वेष्वपिवर्गचक्रंविलोक्यतत्तत्फलमूहनी यम् ॥४८॥ शरीरवर्णंचिह्नायुर्वयोमानंसुखासुखम् ॥ जातिःशीलंचमतिमांल्लग्नात्सर्वंविचिंतयेत् ॥४९॥

लित्वेनशुभाशुभफलंचिंत्यंविचार्यम् । यथा । यदिलग्नंशुभग्रहाधिकवर्गशालिस्यादथवालग्नस्वामीशुभग्रहः सन्मित्रगृहेस्व गृहेस्वोच्चेवा तदाशुभफलंज्ञेयम् । यदिलग्नस्वामीसमगृहेवर्तते तदाशुभाशुभफलाभावः । यदिलग्नंपापग्रहाधिकवर्गशालि स्यादथवास्वामीपापग्रहःसन्शत्रुगृहेनीचेवा तदाशुभंफलंज्ञेयम् । एवंसर्वेष्वपिभावेपुलग्नादिद्वादशभावेपुचवर्गचक्रद्वादश वर्गिकाकार्या तांदृष्ट्वातत्तद्भावस्यशुभाशुभफलमनयैवरीत्या ऊहनीयंविचारणीयम् ॥ इतिद्वादशवर्गिका ॥ ४८ ॥ अथलग्ने किंविचार्यमित्यतआह । शरीरेति । वर्षलग्नंप्रश्नलग्नंचांगीकृत्यशरीरादिसर्वंविचार्यम् । तद्यथा । स्वशरीरंकृशंपुष्टंचवर्णः रक्तःश्वेतःशुकतनुनिभइत्यादि चिह्नंमशकादि आयुर्जीवनंकियत् वयोमानंवाल्यंयौवनंवार्धकमिति सुखं असुखंदुःखं

अथद्वादशवर्ग्यांशुभपापग्रहवर्गफलनिर्णयःकथंस्यादित्यतआह । एवमिति । एवंग्रहाणांशुभपापवर्गपंक्तिद्वयंवीक्ष्य तद्यथा पूर्वोक्तप्रकारेणग्रहाणांद्वादशवर्गीकार्या तत्रग्रहहोरादिद्वादशस्थानेषुकियंतःशुभग्रहवर्गाः पापवर्गाश्चकियंतइतिविचार्य शुभग्रहसंख्याभिन्नालेख्या पापग्रहसंख्याभिन्नालेख्या पंक्तिद्वयस्यांतरंकार्यम् इति । यदिशुभाधिकत्वंशुभग्रहस्यशेषम

एवंग्रहाणांशुभपापवर्गपंक्तिद्वयंवीक्ष्यशु
भाधिकत्वे॥ दशाफलंभावफलंच वाच्यं
शुभंत्वनिष्टंह्यशुभाधिकत्वे ॥४६॥ क्रूरो
ऽपिसौम्योधिकवर्गशालीशुभोतिसौम्यः
शुभखेचरश्चेत् ॥ सौम्योऽपिपापाधिकव
र्गयोगान्नेष्टोऽतिनिंद्यःखलुपापखेटः ॥४७॥

एतद्द्वादशवर्गीचक्रम्.

| र | चं | मं | बु | गु | शु | श | ग्रहाः |
|---|---|---|---|---|---|---|---|
| श | बु | गु | गु | गु | मं | शु | प्रथ. |
| चं | र | र | र | चं | र | र | द्विती. |
| श | शु | मं | मं | शु | चं | शु | तृती. |
| मं | गु | गु | गु | बु | र | शु | चतु. |
| बु | श | गु | गु | शु | म | श | पंच. |
| मं | श | बु | शु | बु | श | शु | षष्ठ. |
| र | श | गु | श | बु | शु | मं | सप्त. |
| बु | श | शु | मं | शु | बु | शु | अष्ट. |
| गु | चं | र | चं | शु | श | गु | नव. |
| गु | श | र | मं | बु | श | गु | दश. |
| बु | चं | श | गु | बु | शु | गु | एका. |
| मं | शु | शु | मं | मं | र | गु | द्वाद. |

द्वादशांशचक्रंलिख्यते.

| १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० | ११ | १२ |
|---|---|---|---|---|---|---|---|---|---|---|---|
| २ | ५ | ७ | १० | १२ | १५ | १७ | २० | २२ | २५ | २७ | ३० |
| ३० | ० | ३० | ० | ३० | ० | ३० | ० | ३० | ० | ३० | ० |

वशिष्टंतदातद्ग्रहस्यदशाफलंभावफलंचशुभमेववाच्यम् यदिअशुभाधिकत्वं अशुभग्रहस्यशेषमवशिष्टंतयातद्ग्रहस्यदशाफलं भावफलंचाशुभमेववाच्यम् ॥ ४६ ॥ अथग्रहभेदेनसौम्यपापवर्गभेदेनचफलतारतम्यमाह । क्रूरोऽपीति । यस्यग्रहस्यद्वादशवर्गिकाक्रियते सचेत्क्रूरोपि यदिपापग्रहोपिभवति द्वादशवर्ग्यांसौम्यग्रहाधिकवर्गेणशालते युक्तोभवतितदाशुभः

समभवनेशुभःपापोवाविद्यमानोग्रहः अशुभःअनिष्टफलदः ॥ ५२ ॥ अथाष्टमभवनेकिंविचार्यमित्यतआह । मृत्याविति । मृत्यौअष्टमस्थानेएतावद्विचार्यम् । चिरंतनंद्रव्यंप्राचीनंद्रव्यम् । मृतवित्तंमृतस्यवित्तम् रणःसंग्रामः रिपुःशत्रुः दुर्गस्थानं मृतिर्मरणम् नष्टंनष्टवस्तु परीवारःकुटुंबम् मनोव्यथामानसीव्यथा ॥ ५३ ॥ अथनवमभवनेकिंविचार्यमित्यतआह । धर्मे इति । धर्मेनवमस्थानेएतावद्विचार्यम् । रतिःक्रीडा पंथाःयात्राविचारः धर्मोपायंधर्मसाधनम् विचिंतयेत् । अथदशमभवनेकिंविचार्यमित्यतआह । व्योम्नीति । व्योम्निदशमभावेएतावद्विचार्यम् । मुद्रांराजमुद्रां परंपुण्यंउत्कृष्टपुण्यं राज्यवृद्धिं

**मृत्यौचिरंतनंद्रव्यंमृतवित्तंरणोरिपुः॥दुर्गस्थानंमृतिर्नष्टंपरीवारोमनोव्यथा॥५३॥ धर्मेरतिस्तथापंथाधर्मोपायंविचिंतयेत्॥ व्योम्निमुद्रांपरंपुण्यंराज्यवृद्धिंचपैतृकम् ॥ ५४ ॥ आयेसर्वार्थधान्यार्घंकन्यामित्रचतुष्पदाः ॥ राज्ञोवित्तंपरीवारोलाभोपायांश्चभूरिशः ॥ ५५ ॥ व्ययेवैरिनिरोधार्तिव्ययादिपरिचिंतयेत् ॥ ५६ ॥ ॥ ॥ ॥**

भागवृद्धिं पैतृकंपितुःसंबंधि ॥ ५४ ॥ अथैकादशभवनेकिंविचार्यमित्यतआह । आयइति । आयेएकादशस्थानेएतावद्विचार्यम् । सर्वार्थः सर्वद्रव्यप्रयोजनम् धान्यार्घःधान्यमौल्यम् कन्या मित्रं चतुष्पदः गजाश्वादिःराज्ञःवित्तंराजद्रव्यम् परीवारः कुटुंबविचारः भूरिशःभूयांसः लाभोपायाःप्राप्त्युपायाः ॥ ५५ ॥ अथव्ययभवनेकिंविचार्यमित्यतआह । व्ययइति । व्यये द्वादशभवनेएतावद्विचार्यम् वैरिनिरोधःशत्रुकृतावरोधः आर्तिःपीडा व्ययादि एतावद्विचिंतयेत् ॥ ५६ ॥ ॥

जातिःब्राह्मणादिः शीलमाचारं एवं मतिमान्बुद्धिमान्लग्नात्सर्वंविचिंतयेत् ॥४९॥ अथधनभवनेकिंविचार्यमित्यतआह । सुवर्णेति । सुवर्णरूप्यरत्नानि धातुःगैरिकादिः द्रव्यंकांस्यादि सखा मैत्रीविचारः धनेधनभवनेएतावद्विचार्यम् । अथसहजभवनेकिंविचार्यमित्यतआह । विक्रमइति । विक्रमेसहजभवनेएतावद्विचार्यम् भ्राता सहजः भृत्यः सेवकः अध्वा यानं पित्र्यंपितुःसंबंधि स्खलनंकार्यभ्रंशः साहसंसाहसकर्म एतानिसहजभवनेविचार्याणि ॥ ५० ॥ अथचतुर्थभवनेकिंविचार्यमित्यतआह । पितृवित्तमिति । पितृवित्तंपितुर्द्रव्यम् निधिःनिक्षिप्तवस्तु क्षेत्रंकूप्यादि गृहम् भूमिः तुर्यतः चतुर्थभवनेएतावद्विचार्यम् । अथपंचमभवनेकिंविचार्यमित्यतआह । पुत्रइति । पुत्रेपंचमभवनेएतावद्विचार्यम्। मंत्रः धनोपायः गर्भः विद्या आत्मजः पुत्रः एतेषांईक्षणमवलोकनंकार्यम् ॥५१॥ अथषष्ठभवनेकिंविचार्यमित्यतआह । रिपाविति । रिपौषष्ठभवनएतावद्विचार्यम् । मातुलः मांद्यंरोगः अरिःशत्रुः चतुष्पाद्गवादि बंधःपराश्रयः भीर्भयम् व्रणःक्षतम् इति । अथसप्तमभवनेकिंविचार्यमित्यतआह । द्यूनइति । द्यूनेसप्तमभवनेएतावद्विचार्यम् कलत्रंजाया वाणिज्यंवणिक्कर्म नष्टं नष्टवस्तु विस्मृतिःविस्मरणं एतेषांसंकथाकथनं हृतंहृतद्रव्यंतस्य अध्वामार्गविचारः कलिःकलहविचारः मार्गादि यात्राविचारः द्यूनेस

सुवर्णरूप्यरत्नानिधातुर्द्रव्यंसखाधने ॥ विक्रमेभ्रातृभृत्याध्वपित्र्यस्खलनसाहसम् ॥ ५० ॥ पितृवित्तंनिधिक्षेत्रंगृहंभूमिश्चतुर्यतः ॥ पुत्रेमंत्रधनोपायगर्भविद्यात्मजेक्षणम् ॥५१॥ रिपौमातुलमांद्यारिचतुष्पाद्बंधभीर्व्रणान् ॥ द्यूनेकलत्रवाणिज्यनष्टविस्मृतिसंकथा ॥ हृताध्वकलिमार्गादिचिंत्यंद्यूनेग्रहोऽशुभः ॥५२॥

ममुनाप्रकारेणनवसंख्याकाभावाःशस्ताःशुभफलदाःस्युः ग्रहाधिष्ठिताद्वादशाष्टमषष्ठभावाअशुभाःस्युः इमेद्वादशाष्टमषष्ठभावाअधिष्ठितग्रहदीप्तांशान् अतिक्रम्यवर्तंते तदातेऽपिभावाःशस्ताःशुभफलदातारःस्युरितिचिंतयेत्। तत्राप्यधिष्ठितग्रहदीप्तांशमध्येइमेरिःफाष्टमरिपुभावायदिस्युस्तदैवानिष्टाइत्यर्थः ॥ ५९ ॥ अथत्रैराशिकस्वामिनआह । त्रिराशिपाइति । दिने दिवावर्षप्रवेशेमेषाच्चतुर्णांराशीनांसूर्यसितार्किशुक्राःस्वामिनःस्युः। तद्यथा दिवावर्षप्रवेशेमेषलग्नंतदासूर्यःवृषस्यशुक्रः मिथुनस्यार्किःशनिः कर्कस्यशुक्रः निशिरात्रौवर्षप्रवेशेमेषादीनांचतुर्णांराशीनांईज्येंदुबुधक्ष्माजाःस्वामिनः । तद्यथा रात्रौमेषस्य

त्रिराशिपाःसूर्यसितार्किशुक्रादिनेनिशीज्येंदुबुधक्ष्माजाः ॥
मेषाच्चतुर्णांहरिभाद्विलोमंनित्यंपरेष्वार्किकुजेज्यचंद्राः ॥ ६० ॥

इदंत्रैराशिकस्वामियंत्रम्.

| १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० | ११ | १२ | · |
|---|---|---|---|---|---|---|---|---|---|---|---|---|
| र | शु | श | शु | गु | चं | बु | मं | श | मं | गु | चं | दिवा. |
| गु | चं | बु | मं | र | शु | श | शु | श | मं | गु | चं | रात्रौ. |

स्वामीगुरुः वृषस्यचंद्रः मिथुनस्यबुधः कर्कस्यभौमः एते । हरिभात्सिंहाच्चतुर्णांराशीनांविलोमंविपरीतंज्ञेयम् मेषादीनांयेदिनेशास्तेसिंहादीनांरात्रावीशाः येमेषादीनांरात्रीशास्तेसिंहादीनांदिनेशाइत्यर्थः। तद्यथा दिनेसिंहलग्नस्यगुरुः कन्यायाश्चंद्रः तुलायाबुधः वृश्चिकस्यभौमः रात्रौसिंहस्यसूर्यः कन्यायाःशुक्रः तुलायाःशनिः वृश्चिकस्यशुक्रः । परेषुधनुरादिषुचतुर्षुराशिपु नित्यंसदा दिवारात्रौ वर्षप्रवेशे आर्किकुजेज्यचंद्राः स्वामिनः। तद्यथा धनुषःशनिः मकरस्यभौमः कुंभस्यगुरुः मीनस्यचंद्रः। दिवारात्रौवर्षप्रवेशेसतिधनुरादीनांदिनरात्रीशयोर्विपर्ययोनास्तीत्यर्थः ॥ ६० ॥ ॥ ॥

एतेषांस्थानानांकेंद्रंकंटकंचतुष्टयंचेति
अथचलिष्ठग्रहस्यलक्षणमाह । लग्नेति । लग्नं अंबुचतुर्थम् द्यूनंसप्तमम् कर्मदशमम् । एतेषांस्थानानांकेंद्रंकंटकंचतुष्टयंचेति
संज्ञाकृता अत्रकेंद्रेस्थितःखेटोग्रहोवलीज्ञेयः तथापि चतुर्थसप्तमदशमस्थानापेक्षयालग्नसंस्थोग्रहोविशेषेणवलीज्ञेयः ॥ ५७॥
अथग्रहाणांशुभस्थानानिवदन्वलिष्ठयोगमाह।लग्नेति। लग्नं कर्मदशमम् अस्तंसप्तमम् तुर्यंचतुर्थम् आयंएकादशं सुतंपंचमम्
अंकंनवमम् एषुस्थानेषुग्रहोवली तत्र यथादिममादिमस्थानमनतिक्रम्य यथादिममग्रिमस्थानापेक्षयापूर्वपूर्वस्थोग्रहोविशेषेण
वलिष्ठः । तद्यथा आदौनवमस्थोग्रहोवलिष्ठस्तदपेक्षयापंचमस्थोवलिष्ठस्तदपेक्षयाएकादशस्तदपेक्षयाचतुर्थस्तदपेक्षयासप्तमस्त

लग्नांबुद्यूनकर्माणिकेंद्रमुक्तंचकंटकम् ॥ चतुष्टयंचात्रखेटोवलीलग्नेविशेषतः ॥ ५७ ॥ लग्नकर्मास्ततु
र्यायसुतांकस्थोवलीग्रहः ॥ यथाऽऽदिमंविशेषेणसत्रिवित्तेषुचंद्रमाः ॥ ५८ ॥ कुजःसत्रिषुपृच्छायां
सूतौचान्यत्रचिंतयेत् ॥ भावानवेत्थंशस्ताःस्यूरिःफाष्टरिपवोऽशुभाः ॥ दीप्तांशातिक्रमेशस्ताइमे
ऽपीतिविचिंतयेत् ॥ ५९ ॥ ॥ ॥ ॥

दपेक्षयादशमस्तदपेक्षयालग्नस्थोवलिष्ठइत्यर्थः एतत्तु सर्वग्रहाणांसाधारणबलमुक्तम् । अथचंद्रमाःसत्रिवित्तेषुतृतीयद्वितीयस
हितेषुपूर्वोक्तेषुस्थानेषुवलीज्ञेयः तत्र द्वितीयेवलिष्ठश्चंद्रस्तदपेक्षयातृतीयेवलिष्ठस्तदपेक्षयानवमस्तदपेक्षयापंचमस्थस्ततःपूर्वव
ज्ज्ञेयः॥५८॥ अथभौमः।कुजइति । कुजोभौमः सत्रिषुतृतीयस्थानसहितेषुप्रागुक्तेषुस्थानेषुवलिष्ठोज्ञेयः तत्र भौमस्तृतीयेवलि
ष्ठस्तदपेक्षयानवमस्थस्ततःपूर्ववज्ज्ञेयः एवमेतत् स्थानस्थंग्रहंपृच्छायांप्रश्नलग्नेसूतौजन्मनि अन्यत्रवर्षलग्नादौचचिंतयेत् इत्थ

अथमहामृत्युयोगानाह ॥ सक्रूरइति ॥ जन्मपेजन्मलग्नस्वामिनिसक्रूरेवर्षपेपापग्रहयुक्तेमृत्यौअष्टमस्थानस्थेसतिमृतिर्मरणं स्यात् ॥ चेद्दिंथिहामुथहायत्रकुत्रापिस्थितःआर्किंयुक्ताशनियुक्तातदामृतिः ॥ भौमक्षुतेक्षणाद्भौमेनक्षुतदृष्ट्याचतुर्थदशमैकसप्तमदृष्ट्यादृष्टासतीतत्रईदृशेयोगेआत्मघाततोमृत्युःस्यात् ॥ २१ ॥ अथमहामृत्युयोगंसर्वमृत्युयोगंपरिहारंचाह ॥ मंद इति ॥ मंदःशनैश्चरःअष्टमेवर्षलग्नादष्टमस्थानेस्थितः मृतीशेत्थशालात् मृतीशःअष्टमभावस्वामीतेनसहमुथशिलयोगान्मृत्युकरःस्मृतःकथितः ॥ अथैतद्योगानामपवादमाह ॥ सर्वेपिमृत्युयोगाःशुभेत्थशालात् यद्यरिष्टकारकाणांग्रहाणांशुभ

सक्रूरेजन्मपेमृत्यौमृतिश्चेद्दिंथिहार्किंयुक् ॥ भौमक्षुतेक्षणेतत्रमृत्युःस्यादात्मघाततः ॥२१॥ मंदोऽष्टमे मृतीशेत्थशालान्मृत्युकरःस्मृतः ॥ शुभेत्थशालात्सर्वेऽपियोगानाशुभदायकाः ॥२२॥ सूतिरंध्रपतिर्मंदोऽष्टमोऽब्देलग्नपेनचेत् ॥ इत्थशालीक्रूरदृशातत्कालंमृत्युदायकः ॥२३॥ पुण्यसद्मनिविधुस्तनौतथाऽस्तेखलोमृतिरथार्थरिष्फगौ॥मृत्युदौखलखगावथोजनुर्वर्षपेशतनुपौमृतौमृतिः॥२४॥इत्यष्टमभावः॥

ग्रहैःसाकंमुथशिलयोगस्तर्हिअशुभदायकाअनिष्टदायकानभवंति ॥ २२ ॥ अथमहामृत्युयोगमाह ॥ सूतिरंध्रपतिरिति ॥ सूतौजन्मकालेरंध्रपतिः अष्टमभावस्वामीमंदःशनिः अब्देवर्षेवर्षलग्नादष्टमस्थानस्थःसन् लग्नपेनवर्षलग्नस्वामिनाचेत्क्रूरदृशाचतुर्थदशमैकसप्तमदृष्ट्या इत्थशालीमुथशिलयोगंकरोति तदातत्कालेतस्मिन्समयेमृत्युदायकोभवति ॥ २३ ॥ २४ ॥ इतिअष्टमभावविचारः ॥ ॥ ॥ ॥ ॥ ॥ ॥

अथनवमभावविचारः ॥ तत्रनवमभावेमार्गधर्मविचारस्तावद्गमनयोगमाह ॥ भौमेइति ॥ भौमेऽब्दपे भौमेवर्षस्वामिनि त्रिनवगेतृतीयगेनवमस्थानेवाक्रूरायुक्तेक्रूरैःपापग्रहैरयुक्तेयोगरहितेवलान्वितेवलिष्ठेसतितदामार्गःगमनंगुणावहःलाभादिसु खकरः ॥ चरंकार्यंत्वरयासाध्यमपिकार्यं ततःतस्मात्स्थिरंविलंवसाध्यंभवति ॥ १ ॥ अथान्यदाह ॥ त्रिधर्मस्थइति ॥ सूर्यःअब्दपःवर्षस्वामीभूत्वाकंवूलीकंवूलयोगवान्सन्त्रिधर्मस्थः तृतीयनवमस्थानस्थस्तदामार्गसौख्यदः सचेन्नाधिकृतःपं चाधिकारिणांमध्यअधिकारीनभवेत्तदाअन्यप्रेषणेनयानंगमनंस्यात् ॥ २ ॥ अथान्यान्गमनयोगान्सार्धश्लोकेनाह ॥ शुक्र

अथभाग्यभावविचारः॥भौमेऽब्दपेत्रिनवगेक्रूरायुक्तेवलान्विते॥गुणावहस्तदामार्गश्चिरंकार्यस्थिरं ततः॥१॥ त्रिधर्मस्थोऽब्दपःसूर्यःकंवूलीमार्गसौख्यदः ॥ अन्यप्रेषणयानंस्यात्सचेन्नाधिकृतोभवेत् ॥२॥ शुक्रेऽब्दपेत्रिनवगेमार्गेसौख्यंविलोमगे ॥ अस्तेवाकुगतिःसौम्येदेवयात्रातथाविधे ॥३॥

इति ॥ क्रूरार्दितइति ॥ शुक्रेऽब्दपेवर्षस्वामिनित्रिनवगेतृतीयनवमस्थानेसति मार्गेगमनंसौख्यदंस्यात् ॥ अथतादृशेशुक्रे विलोमगेवक्रिणिअस्तेवा अस्तंगतेवासतिकुगतिःकुत्सितगतिःकुगमनंकार्यसिद्धिर्नस्यादित्यर्थः ॥ तथावुधेतादृशेवर्षस्वामि निसवलेत्रिनवगेसौम्येवुधेसति देवयात्रादेवोद्देशेनयात्रास्यात् ॥ इदंतीर्थयात्रादेरप्युपलक्षणं ॥ तादृशेशुक्रेक्रूरार्दितेपा पग्रहैःपीडितेयुक्तेवासति कुयानंकुत्सितगमनंस्यात् ॥ एवममुनाप्रकारेणवर्षस्वामिनित्रिनवगेगुरौसतिदेवयात्रांविचिंतये त्कथयेत् तस्मिन्गुरौक्रूरार्दितेतुकुयानंस्यात् ॥ ३ ॥ ॥ ॥ ॥

अथचिंतितयात्रायोगमुत्तरार्धेनाह ॥ इत्थशालइति ॥ लग्नधर्मपत्योःवर्पलग्नस्वामिनासहनवमभावस्वामिनःइत्थशालेमुथशिलयोगेसतिअचिंतिताअकस्मात्यात्रास्यात् ॥ ४ ॥ अथविपरीतंमुथशिलस्यान्यत्रातिदेशमाह ॥ लग्नेशइति ॥ लग्नेशोवर्पलग्नस्वामीधर्मपेननवमभावस्वामिनामुथशिलयोगंकरोति तदाचिंतितगमनं । एवममुनाप्रकारेणलग्नाब्दपयोर्योगेवर्पलग्नस्वामीअनयोर्योगेसतितथामुथहस्वामी अंगपोवर्पलग्नस्वामीअनयोर्योगेसतिमुथशिलंपूर्वोक्तंस्यात् ॥ ५ ॥ अथसद्यात्रायोगावाह ॥ गुरुस्थानइति ॥ गुरुस्थानेजन्मकालेगुरुर्बृहस्पतिर्यस्मिन्राशावस्तितस्मिन्राशौवर्पकालीनेकुजेभौमेधर्मे नवम

क्रूरार्दितेकुयानंस्याद्गुरावेवंविचिंतयेत् ॥ इत्थशालेलग्नधर्मपत्योर्यात्रास्त्यचिंतिता ॥ ४ ॥
लग्नेशोधर्मपंयच्छन्स्वंमहश्चिंतिताब्दद ॥ एवंलग्नाब्दयोर्योगेमुथहांगपयोरपि ॥ ५ ॥
गुरुस्थानेकुजेधर्मेसद्यात्राभृत्यवित्तदा ॥ ज्ञस्थानेलग्नपोभौमोदृष्टःसद्यानसौख्यदः ॥ ६ ॥
स्वस्थानगोवाबलवान्लग्नदर्शीसुयानदः ॥ जन्माधिकारीज्ञोमंदस्थानेक्रूरयुतोयदा ॥७॥

स्थानगतेसति सद्यात्रासमीचीनायात्रा भृत्यःसेवकःवित्तंभृत्यद्रव्यप्राप्तिकारिकास्यात् ॥ अयमेकोयोगः ॥ अथान्यः ॥ ज्ञस्थानेजन्मकालेबुधोयस्मिन्राशावस्ति तस्मिन्राशौवर्पकालीनेभौमेलग्नपेलग्नस्वामिनादृष्टःसन्सद्यानसौख्यदःस्यात् ॥ ६ ॥ अथान्यंसद्यात्रायोगंश्लोकार्धेनाह ॥ स्वस्थानगइति ॥ जन्मकालेभौमःस्वस्थानगोमेपवृश्चिकगतोवर्पेपिमेपवृश्चिकराशिगतः सन् नवमेबलवान्स्यात् लग्नदर्शीलग्नंपश्यति तदासुयानदःशुभगमनंदोभवेत् ॥ अथशुभयात्रायोगान्सार्धश्लोकेनाह ॥

जन्माधिकारीति ॥ ज्ञोबुधःजन्माधिकारीजन्मकालेअधिकारीभूत्वा मंदस्थाने जन्मकालीनशन्याक्रांतराशिगतःसन्वर्षेन वमस्थानगतःक्रूरयुतःपापग्रहयुक्तोयदाभवेत्तदारिपोःशत्रोर्झंकटकात् कलहप्रसंगात्पंथाःमार्गगमनंस्यात् ॥ गुरुरध्वेति ॥ इंदुजीवयोः जीवोबृहस्पतिः अमुनाप्रकारेणजन्मकालेअधिकारीभूत्वाजन्मकालीनशन्याक्रांतराशिगतःसन्वर्षेनवमस्थान गतयोःपापग्रहयुतयोःसतोःशत्रुकलहाद्गुरुर्भूयानध्वामार्गःस्यात् ॥ धर्मेइति ॥ वर्षेनाधिकारीपंचाधिकारीरहितः शनिर्धर्मेन वमस्थानेसन्नशुभंपंथानंवदेत्कथयेत् ॥ ७ ॥ ८ ॥ अथदूरयात्रायोगावाह ॥ इत्थमिति ॥ इत्थममुनाप्रकारेणवर्षे अधिकार

पंथारिपोर्झंकटकाद्गुरुरध्वेंदुजीवयोः ॥ धर्मेशनिर्नाधिकारीपंथानमशुभंवदेत् ॥ ८ ॥
इत्थंगुरौदूरयात्रान्नृपसंगस्ततोगुणः ॥ कुजेऽब्दपेनष्टबलेस्वजनाद्दूरतोगतिः ॥ ९ ॥
द्यूनेंथिहाधर्मइंदौसबलेऽध्वाविदेशगः ॥ वर्षेशोबलवान्पापायुतःकेंद्रेऽधिकारवान् ॥ १० ॥

रहितेनवमस्थानगतेगुरौसति दूरयानंस्यात् । नृपसंगःराज्ञासहमेलनंस्यात् । ततोगुणः ततःराज्ञःसकाशाद्गुणःद्रव्यप्राप्तिश्च स्यात् ॥ अयमेकोयोगः ॥ अथान्यः ॥ कुजेभौमे अब्दपेवर्षस्वामिनिनष्टबलेनवमस्थानगतेसति स्वजनात्स्वकीयकुटुंबवर्गा दूरेगतिर्गमनंस्यात् ॥ ९ ॥ अथप्रबलविदेशयात्रायोगंश्लोकपूर्वार्धेनाह ॥ द्यूनेंथिहेति ॥ द्यूनेसप्तमस्थानेइंथिहामुथहा धर्म इंदौधर्मेनवमस्थानेइंदौचंद्रेसबलेबलिष्ठेसतिविदेशगः परदेशगमनप्रयोजकः अध्वामार्गोभवति ॥ अथवर्षाधीशस्यकेंद्रगत त्वेनविशेषफलमेतच्छ्लोकोत्तरार्धाग्रिमश्लोकपूर्वार्धाभ्यामाह ॥ वर्षेशइति ॥ वर्षेशोवर्षस्वामीबलवान्बलिष्ठः पापायुतःपाप

ग्रहैर्नयुतः अधिकारवान्पंचाधिकारिणांमध्येअधिकारीभूत्वाकेंद्रेसति अधिकारोगतिःप्राप्तिःस्यात् संख्येसंग्रामेसेनापत्यं वदेत् ॥ अथान्यदाह ॥ एवमिति ॥ एवमुक्तप्रकारेणबुधेकुजेभौमेवाबलयुते अर्कान्निर्गतेउदितेजीवयुतेबृहस्पतियुतेकेंद्रव र्तिनिसतिपुनःपरसैन्योपरिगतिर्गमनंस्यात् ॥ तत्सकाशाज्जयःख्यातिसुखावहःस्यात् ॥ अथोत्तरार्धेनविशेषमाह ॥ जीवा दिति ॥ जीवात्गुर्वाक्रांतराशेःसकाशान्नवमगेनवमस्थानेभौमेसतिनृणांमनुष्याणांयात्राशुभाभवेत् ॥ १० ॥ ११ ॥ १२॥

अधिकारोगतिःसंख्येसेनापत्येपिवावदेत् ॥ एवंबुधेकुजेजीवयुतेर्कान्निर्गतेपुनः ॥ ११ ॥
परसैन्योपरिगतिर्जयःख्यातिसुखावहः ॥ जीवान्नवमगेभौमेशुभायात्रानृणांभवेत् ॥ १२ ॥
इतिनवमभावविचारः॥ ॥अथदशमभावविचारः॥ सबलेऽब्दपतौखस्थेराज्यार्थसुखकीर्तयः॥
स्थानांतराप्तिरन्यस्मिन्केंद्रेगृहसुखाप्तयः ॥ १ ॥ इत्थंबलीरविर्भूस्थःपूर्वार्जितपदाप्तिकृत् ॥
एकादशेऽस्मिन्सख्यंस्यान्नृपामात्यगणोत्तमैः ॥ २ ॥ ॥ ॥

इतिनवमभावविचारः ॥ ॥ अथदशमभावविचारः ॥ सबलइति ॥ सबलेबलिष्ठे अब्दपतौवर्षस्वामिनि खस्थेदशमस्थानस्थे सति राज्यार्थसुखकीर्तयोभवंति ॥ अयमेकोयोगः ॥ अथान्यः ॥ अन्यस्मिन्केंद्रेदशमव्यतिरिक्तस्थाने स्थानांतराप्तिः गृहसुखाप्तयश्चभवंति ॥ १ ॥ अथस्थानविशेषेणवर्षस्वामिनःसूर्यस्यविशेषफलमाह ॥ इत्थमिति ॥ इत्थममुनाप्रकारेण वर्षस्वामीभूत्वाबलीबलिष्ठोरविःसूर्यःभूस्थः चतुर्थस्थानस्थःपूर्वार्जितपदाप्तिकृत् ॥ अस्मिन्नेतादृशेसूर्येएकादशस्थानस्थेसति

नृपामात्यगुणोत्तमैःसख्यंस्यात् ॥ २ ॥ अथराज्यप्राप्तियोगंनृपाद्बंधनयोगंचाह ॥ रविस्थानेंथिहेति ॥ रविस्थानेजन्मकालीनसूर्याधिष्ठितराशौ वर्षकाले इंथिहामुथहाभवेत् लग्नेवर्षलग्नेखेदशमस्थानेवाराज्यप्राप्तिसौख्यदास्यात् ॥ अयमेकोयोगः ॥ अथान्यः ॥ तथाअर्कःसूर्यःनीचेनीचराशिगतःपापसंयुक्तःपापग्रहयुक्तःसन्दशमस्थानगतश्चेत्तदाभूपाद्राज्ञःसकाशाद्बंधःबंधनंहननंचदिशेत्कथयेत् ॥ ३ ॥ अथान्यौस्थानप्राप्तियोगावाह ॥ सिंहइति ॥ सिंहेरविःमूलवाक्यानुरोधाज्जन्मनीतिपदमत्राध्याहार्यं ॥ जन्मकालेसिंहराशिगतःसूर्योवर्षकालेवलीवलिष्ठःसन्खस्थःदशमस्थानस्थश्चेत्तदास्थानंपदं तस्यला

रविस्थानेंथिहालग्नेखेवाराज्याप्तिसौख्यदा ॥ नीचेऽर्कःपापसंयुक्तोभूपाद्बंधवधंदिशेत् ॥ ३ ॥
सिंहेरविर्वलीखस्थःस्थानलाभोनृपाश्रयः ॥ स्थानांतराधिकाराप्तिरिंदुरारपदेबली ॥ ४ ॥
खेशलग्नेशवर्षेशेत्थशालोराज्यदायकः ॥ वर्षेशेराज्यसहमेऽर्केत्थशालेमहानृपः ॥ ५ ॥

भोनृपाश्रयःराजाश्रयश्चस्यात् ॥ अयमेकोयोगः ॥ अथान्यः ॥ एवंजन्मकालेआरपदेभौमाक्रांतराशौ वर्षतद्राशिगतः इंदुश्चंद्रःवलीचेत्तदास्थानांतरेअधिकारप्राप्तिःस्यात् ॥ ४ ॥ अथान्यौराज्यप्राप्तियोगावाह ॥ खेशइति ॥ खेशःवर्षकालीनदशमस्थानस्वामीलग्नेशःवर्षलग्नस्वामीवर्षेशःएतेषांइत्थशालेपरस्परमुथशिलयोगेसतिराज्यदायकःराज्यप्रदोभवति ॥ अयमेकोयोगः ॥ अथान्यः ॥ वर्षेशेवर्षस्वामिनिराज्यसहमेराज्यसहमस्थानगतेसतिअर्केत्थशालेसूर्येणसहमुथशिलयोगेसतिमहानृपोराजास्यात् ॥ ५ ॥ ॥ ॥ ॥ ॥

अथान्यंद्रव्यनाशयोगमाह ॥ शनिस्थानइति ॥ जन्मकालेशनिस्थानेशन्याक्रांतराशौवर्षकालेकुजोभौमःदशमगःसन्यदिमु थहापश्यतितदापापकर्मतःनृपभीतिंवित्तनाशंचदद्यात् ॥ ६ ॥ अथपापपुण्यवृद्धियोगावाह ॥ ईदृशइति ॥ ईदृशेजन्म कालीनशन्याक्रांतराशौवर्षेत्रिनवस्थेतृतीयनवमस्थानस्थेऽस्मिन्भौमेदग्धेऽस्तंगतेनष्टेहीनबलेअघसंचयःअघस्यपापस्यसंचयो वृद्धिःस्यात् ॥ अयमेकोयोगः ॥ अथान्यः ॥ मंदःशनैश्चरःअब्दपःवर्षस्वामीअधिकारीपंचाधिकारिणांमध्येअधिकारीभूत्वा त्रिधर्मगःतृतीयनवमस्थानस्थश्चेत्स्यात्तदाधर्मवृद्धिदोभवति ॥ ७ ॥ अथदुष्टयोगौशुभयोगंचाह ॥ तस्मिन्निति ॥ तस्मिन्व

शनिस्थानेकुजःपश्यन्मुथहापापकर्मतः ॥ नृपभीतिंवित्तनाशंदद्याद्दशमगोयदि ॥ ६ ॥
ईदृशेत्रिनवस्थेऽस्मिन्दग्धनष्टेऽघसंचयः ॥ मंदोऽब्दपोधिकारीत्रिधर्मगोधर्मवृद्धिदः ॥ ७ ॥
तस्मिन्दग्धेविनष्टेचपापकृद्धर्मनिंदकः ॥ ईदृशिदृक्फलंसूर्येगुराविथ्थंनयार्थभाक् ॥ ८ ॥

र्षस्वामिनिशनौअधिकारिणिदग्धेवाविनष्टेवासतिपापकृद्धर्मनिंदकश्चभवेत् ॥ अयमेकोयोगः ॥ अथान्यः ॥ ईदृशिसूर्येवर्ष स्वामिन्यधिकारिणित्रिनवगेदग्धेवाविनष्टेवासतिईदृक्फलंपापकृद्धर्मनिंदकश्चपुरुषःस्यात् ॥ अथशुभयोगः ॥ गुराविथ्थ मिति ॥ इथ्थममुनाप्रकारेणवर्षस्वामिन्यधिकारिणितृतीयनवमगेदग्धेवाविनष्टेवागुरौसतिनयार्थभाक् नयेननीतिमार्गेणा र्थंद्रव्यंप्राप्नोति ॥ ८ ॥ ॥ ॥ ॥ ॥ ॥

अथमुथहासंबंधिशुभाशुभफलंश्लोकपूर्वार्धेनाह ॥ तत्रस्थेति ॥ तत्रस्थातृतीयनवमस्थानस्थामुथहापुण्यागमनंकरोति ॥ अथराज्यप्राप्तियोगमाह ॥ सूताविति ॥ सूतौजन्मकालेखेशेदशमभावस्वामिनि रवौसूर्ये वर्षेवर्षकालेखस्थेदशमस्थानेस्थितःसन् - यदिलग्नाधिपेनवर्षलग्नस्वामिनासहमुथशिलंमुथशिलयोगोभवेत्तदावीर्यानुमानतःसूर्यस्यविश्वात्मकबलानुमानेनराज्याप्तिःराज्यप्राप्तिरुक्ताकथिता ॥ अथधर्मराज्यनाशयोगौश्लोकस्योत्तरार्धेनाह ॥ धर्मेति । धर्मकर्माधिपौनवमभावस्वामी दशमभावस्वामीएतावुभौदग्धौस्यातांतदाधर्मराज्यक्षयावहौनाशकर्तारौभवतः ॥ नवमभावस्वामीदग्धबलश्चेत्तदाधर्मनाशः ॥ दशमभावाधीशश्चेद्दग्धबलस्तदाराज्यनाशः ॥ ९ ॥ १० ॥ इतिदशमभावविचारः ॥ ॥ अथायभावविचारः ॥ तत्रलाभयोगमाह ॥ अब्दपेज्ञइति ॥ अब्दपे वर्षस्वामिनि ज्ञेबुधेऽर्थगेधनभावगेशुभदृग्युतेशुभग्रहैर्दृष्टेयुक्तेसतिवाणिज्याल्लाभः स्यात् ॥ अयमेकोयोगः ॥ अथान्यः ॥ असिन्बुधेवर्षस्वामिनि शुभग्रहैर्दृष्टयुक्तेसेंथिहाइंथिहायुक्तःलग्नगतेवर्षकालीनलग्नगतेसतिपठनलेखनाल्लाभः ॥ १ ॥ ॥ ॥ ॥ ॥ ॥

तत्रस्थामुथहापुण्यागमंपापंखलाश्रयात् ॥ सूतौखेशेरवौखस्थेवर्षेमुथशिलंयदि ॥ ९ ॥
लग्नाधिपेनराज्याप्तिरुक्तावीर्यानुमानतः ॥ धर्मकर्माधिपौदग्धौधर्मराज्यक्षयावहौ ॥ १० ॥
इतिराज्यभावविचारः ॥ ॥ अथाऽयभावविचारः ॥ अब्दपेज्ञेऽर्थगेलाभोवाणिज्याच्छुभदृग्युते ॥ सेंथिहेऽस्मिँल्लग्नगतेलाभःपठनलेखनात् ॥ १ ॥ ॥ ॥

अथाशुभंफलमाह ॥ अस्मिन्निति ॥ अस्मिन्बुधेवर्षाधीशेषष्ठाष्टांत्यगतेषष्ठाष्टमद्वादशस्थानगते सक्रूरेपापग्रहयुक्तेसतिनीचकर्मकृत् पुरुषःस्यात् ॥ तादृशोबुधोवर्षस्वामीसन्षष्ठाष्टांत्यगेक्रूरेक्षणेपापग्रहैर्दृष्टेसतिलाभोनास्तीतिवाच्यम् ॥ वा अस्तगतेसति लिखनादितःलेखनतःलाभोनास्ति ॥ २ ॥ अथाशुभशुभयोगावाह ॥ जीवइति ॥ जीवेगुरौअब्दपेवर्षस्वामिनिक्रूरहतेपापग्रहपीडितेलग्नेवर्षलग्नेसतिहानिर्द्रव्यनाशःनृपाद्राज्ञःसकाशात्भयंचस्यात् ॥ अयमेकोयोगः ॥ अथान्यः ॥ अस्मिन्गुरौअधिकृतेपंचाधिकारिणांमध्येअधिकारीसन् द्यूनेसप्तमस्थानेसतिव्यवहाराद्वणिक्कर्मणाधनाप्तयःद्रव्याप्तिःस्यात् ॥ ३ ॥

अस्मिन्षष्ठांत्यगतेसक्रूरेनीचकर्मकृत् ॥ क्रूरेक्षणेनवालाभोऽस्तंगतेलिखनादितः ॥ २ ॥
जीवेऽब्दपेक्रूरहतेलग्नेहानिर्भयंनृपात् ॥ अस्मिन्नधिकृतेद्यूनेव्यवहाराद्धनाप्तयः ॥ ३ ॥
लग्नायेशेत्थशालेस्याल्लाभःस्वजनगौरवम् ॥ सर्वेपिलाभेवित्ताप्त्यैसबलानिर्बलानतु ॥ ४ ॥
सवीर्योज्ञःसमुथहोलग्नेऽर्थसहमेशुभाः ॥ तदानिखातद्रव्यस्यलाभःपापदृशानतु ॥ ५ ॥

अथप्राप्तियोगावाह ॥ लग्नायेशेत्थशालइति ॥ वर्षलग्नस्वामी ॥ आयेशः लाभभावस्वामी अनयोरित्थशालेपरस्परमुथशिलयोगेसतिलाभःस्यात् स्वजनेषुगौरवंचस्यात् ॥ अयमेकोयोगः ॥ अथान्यः ॥ सर्वेपिसर्वग्रहाः सबलाःसंतः लाभेएकादशस्थानेसन्तोवित्ताप्त्यैद्रव्यप्राप्त्यैभवंति ॥ यदिलाभस्थाःसर्वेग्रहाःनिर्बलास्तदाद्रव्यप्राप्त्यैनभवंति ॥ ४ ॥ अथनिखातद्रव्यप्राप्तियोगमाह ॥ सवीर्यइति ॥ ज्ञोबुधःसवीर्यः बलयुक्तः । पुनःकीदृशः । समुथहामुथहायुक्तोलग्नेवर्षलग्नेस्यात् । बलिष्ठोमुथहास

हितोबुधोवर्पलग्नेस्यादित्यर्थः ॥ अर्थसहमेद्रव्यसहमेपिशुभाःशुभग्रहालग्नेचेत्स्युस्तदानिखातद्रव्यस्यगर्तेस्थापितद्रव्यस्यला भोभवेत् ॥ पापदृशाएतादृशलग्नस्थयोगेपापग्रहैर्दृष्टेसतिनिखातद्रव्यस्यलाभोनस्यान्नास्त्येव ॥ ५ ॥ इत्यायभावविचारः ॥ अथव्ययभावविचारः । अथसार्धश्लोकेनव्ययविचारमाह ॥ लग्नाब्दपाविति ॥ लग्नाब्दपौवर्पलग्नस्वामीवर्पस्वामिनौ हतवलौ निर्वलौ व्ययपण्मृतिस्थौद्वादशपष्ठाष्टमस्थानगतौसंतौयद्राशिगौ यस्मिन्राशावास्थितौस्यातां ॥ तदातदनुसारिफलंतस्मि न्स्थानेयादृशंफलमुक्तंतादृशंफलंविचिंत्यंज्ञातव्यं ॥ यथावर्पस्वामीपष्ठगतःसचतुष्पदराशिगतश्चेत्तदाचतुष्पदनाशोवाच्यः ॥ एवमष्टमद्वादशस्थयोरपीत्यर्थः ॥ अथपष्ठस्थानस्थितस्यशुक्रस्यविशेषमाह ॥ शुक्रइति ॥ भृगुसुतेशुक्रेऽब्दपेवर्पस्वामिनिप

## इत्यायभावविचारः॥ ॥ अथव्ययभावविचारः॥लग्नाब्दपौहतबलौव्ययपण्मृतिस्थौयद्राशिगौतदनु सारिफलंविचिंत्यम् ॥ पष्ठेऽब्दपेभृगुसुतेऽथविनष्टवीर्येदृष्टेखलैःक्षुतदृशाद्विपदर्क्षसंस्थे ॥ १ ॥ ॥

ष्ठेपष्ठस्थाने ॥ विनष्टवीर्येहीनवलेखलैःपापग्रहैःक्षुतदृशाचतुर्थदशमैकसप्तमदृष्यादृष्टे द्विपदक्षेसंस्थेनृराशिसंस्थेसतिभृत्य क्षतिः सेवकानांनाशःस्यात् ॥ तादृशेशुक्रेचतुरंघ्रिभस्थेचतुष्पदराशिगतेसतितुरगहाअश्वहानिकरःस्यात् ॥ अश्वइत्युपल क्षणं ॥ अन्यचतुष्पदहानिरपिद्रष्टव्या ॥ एवमन्यस्मिन्नपि अब्दनाथेवर्पस्वामिनिपष्ठाष्टमद्वादशस्थानेपुनरपितद्राशिगेसति इदमुदितंपूर्वोक्तभृत्यनाशादिफलंवाच्यं ॥ अथवर्पस्वामीभौमस्तस्यस्थानविशेषेफलंश्लोकस्योत्तरार्धेनाह ॥ खस्थइति ॥ वर्प स्वामिनिकुजेभौमे शशियुतेचंद्रयुक्ते खस्थेदशमस्थानस्थेसति अश्वादीनांनाशः मनसिव्याकुलत्वंचस्यात् ॥ अथतादृशे

चंद्रयुक्तेवर्षस्वामिनिभौमेअशुभोपहतेपापग्रहहतेव्ययेद्वादशस्थानस्थेसतिअश्वादीनांनाशादिफलंवाच्यं ॥ अत्रशशियुतेइ तिपाठः स्वबुद्ध्याग्रंथकर्त्राकृतः । वस्तुतस्तु खस्थेकुजेशनियुतइतिपाठः पूर्वग्रंथानुरोधात् ॥ उक्तंचसमरसिंहेन ॥ शनियु जिकुजेगगनेवहाकुल्यंतुरंगनाशश्चेति ॥ ताजिकालंकारे ॥ भौमेमंदयुतेस्थितेचदशमेस्यादाकुलत्वंमनस्यश्वानांक्षतिरे वेति ॥ तथाचखस्थेकुजेशनियुतेतुरगादिनाशः आकुलत्वंच ॥ अयमेकोयोगः ॥ अथान्यः ॥ कुजेअशुभोपहतेव्ययेसती त्यर्थः ॥ अथवापापाक्रांतेव्ययभवनेसति ॥ तुरगादिनाशइत्यादि ॥ १ ॥ २ ॥ अथसूर्यशन्योरप्यब्दपयोरशुभस्थानगतयोः

भृत्यक्षतिस्तुरगहाचतुरंघ्रिभस्थेऽन्यस्मिन्नपीदमुदितंफलमब्दनाथे ॥ खस्थेकुजेशशियुतेतुरगादि नाशःस्याद्व्याकुलत्वमशुभोपहतेव्ययेवा ॥ २ ॥ पष्ठेरवौखलहतेचतुरंघ्रिभस्थेभृत्यैःसमंकलिरथाष्ट मरिःफगेऽपि ॥ मंदेऽब्दपेवलयुतेरिपुरिःफसंस्थोभूवासनद्रुमजलाशयनिर्मितिश्च ॥३॥ ॥

फलमाह ॥ पष्ठेइति ॥ रवौसूर्ये वर्षस्वामिनिषष्ठेषष्ठस्थानेखलहते पापग्रहाक्रांतेचतुरंघ्रिभस्थे चतुष्पदराशिसंस्थे अथाष्ट मरिःफगेपि अष्टमस्थानगतेऽथवाद्वादशस्थानगतेसतिभृत्यैःसेवकैःसहकलिःकलहःस्यात् ॥ अथमंदेशनौअब्दपेवर्षस्वामि निवलयुते रिपुरिःफस्थे षष्ठद्वादशस्थानसंस्थेसति भूवासनंउज्जटभूमौग्राममनिर्मितिःतस्मिन्भूमौद्रुमाणांजलाशयानांकूप तडागानांनिर्मितिश्चस्यात् ॥ ३ ॥ ॥ ॥ ॥ ॥

अथस्थानांतरगतानांग्रहाणांफलमाह ॥ स्वर्क्षोच्चगइति ॥ सूर्यपुत्रेशनौवर्षस्वामिनिस्वर्क्षे स्वराशौमकरकुंभसंस्थे स्वोच्चेतुलाराशौस्थिते कर्मणिदशमस्थानेसति नैरुज्यंशरीरेआरोग्यमर्थाधिगमःद्रव्यप्राप्तिश्चस्यात् ॥ एतादृशेजीवेगुरौवर्षस्वामिनिधनुर्मीनकर्कस्थेदशमगतेसतिआरोग्यंद्रव्यप्राप्तिश्चस्यात् ॥ तादृशेसूर्येसिंहमेषस्थेसतिदशमस्थेराज्ञोनृपात्सकाशादर्थप्राप्तिः ॥ एतादृशेकुजेभौमेवर्षस्वामिनिमेषवृश्चिकमकरगतेसतिदशमस्थेस्वबाहुबलाद्द्रव्यप्राप्तिःस्यात् ॥ एतादृशेबुधेवर्षस्वामिनिमिथुनकन्यास्थेसतिदशमस्थेभिषक्ज्योतिषकाव्यशिल्पैःकृत्वाद्रव्यप्राप्तिःस्यात् ॥ ४ ॥ अथनिर्बलशनेःफलंश्लोकपूर्वा

स्वर्क्षोच्चगेकर्मणिसूर्यपुत्रेनैरुज्यमर्थाधिगमश्चजीवे ॥ सूर्येनृपाद्बाहुबलात्कुजेऽर्थोबुधेभिषग्ज्योतिषकाव्यशिल्पैः ॥ ४ ॥ मंदेऽब्दपेगतबलेनैराश्यंदौःस्थ्यमादिशेत् ॥ सूर्येऽब्देशेशशिस्थानेमंदेऽब्दजनुपोर्हते ॥ ५ ॥ सर्वकर्मसुवैकल्यंवक्रेऽस्तेचतथापुनः ॥ कर्मकर्मेशसहमनाथाःशनियुतेक्षिताः ॥ ६ ॥

र्धेनाह ॥ मंदइति ॥ मंदेशनैश्चरेअब्दपेवर्षस्वामिनिगतबलेनिर्बलेदशमस्थितेसतिनैराश्यंआशाराहित्यंदौःस्थ्यंचंचलचित्तत्वमादिशेत्कथयेत् ॥ अथवर्षेशसूर्यस्यफलमाह ॥ श्लोकोत्तरार्धोत्तरश्लोकपूर्वार्धाभ्यां ॥ सूर्येऽब्देशेवर्षस्वामिनिसतिमंदेशनैश्चरेअब्दजनुपोःअब्देवर्षकालेजनुषिजन्मकालीनराशिस्थानेचंद्राक्रांतराशिगतेतथाहतेवर्षकालजन्मकालयोर्हतेपापग्रहैःपीडितेसतिसर्वकर्मसु वैकल्यंज्ञानादिराहित्यंस्यात् ॥ तथातादृशेपुनःशनौवक्रेअस्तंगतेवासतिसर्वकर्मसुवैकल्यंस्यात् ॥ अथकर्मभावकर्मेश्वरकर्मसहमेश्वराणांशनियुतिदृष्टिभ्यामशुभफलमुत्तरार्धेनाह ॥ कर्मेति ॥ कर्मभावकर्मेशकर्मभावस्वामि

सहमनाथाःक्रमसहमाधीशाःशनियुतेक्षिताःशनिनायुक्तादृष्टाश्चेद्भवंतितदासर्वकर्मसुवैकल्यंस्यात् ॥ ५ ॥ ६ ॥ अथदुष्टस्था
नस्थस्यवर्षेशस्यफलमाह ॥ षडष्टव्ययगइति ॥ अब्देशेवर्षस्वामिनिषडष्टव्ययगेषष्ठगेऽष्टमगतेद्वादशगतेवासति ॥ तथाकर्मे
शेचदशमभावस्वामिनिसूतावब्देचसूतौजन्मकालेअब्देवर्षकालेचबलोज्झितेनिर्बलेनशुभंस्यात् ॥ तत्राऽब्देतस्मिन्वर्षेमृतिपे
अष्टमभावस्वामिनितथातद्वत्षष्ठाष्टमद्वादशगतेनिर्बलेवासतिनैवशुभंस्यात् ॥ ७ ॥ अथवर्षेसामान्यतःशुभाशुभफलमाह ॥
यत्रभावइति ॥ जन्मनिजन्मकालेयत्रयस्मिन्भावेशुभफलदोदुष्टफलदोवायःकश्चिद्ग्रहोऽस्तिसग्रहोवर्षेऽपितद्भावगःसन् ताद

षडष्टव्ययगेऽब्देशेकर्मेशेचबलोज्झिते ॥ सूतावब्देचनशुभंतत्राऽब्देमृतिपेतथा ॥ ७ ॥
यत्रभावेशुभफलोदुष्टोवाजन्मनिग्रहः ॥ वर्षेतद्भावगस्तादृक्तत्फलंयच्छतिध्रुवम् ॥ ८ ॥
येजन्मनिस्युःसबलाविवीर्यावर्षेशुभंप्राक्चरमेत्वनिष्टम् ॥ दद्युर्विलोमंविपरीततायांतुल्यं
फलंस्यादुभयत्रसाम्ये ॥ ९ ॥ इतिव्ययभावविचारः ॥ ॥

शस्तत्फलंशुभाशुभफलंध्रुवंनिश्चितंयच्छतिददाति ॥ ८ ॥ अथवर्षेग्रहाणांफलपाककालमाह ॥ येजन्मनिस्युरिति ॥ जन्म
निजन्मकाले येग्रहाःसबलाःबलिष्ठाःस्युस्तेग्रहाः वर्षेविवीर्यानिर्बलाःस्युस्तदातेग्रहाःप्राग्वर्षस्यपूर्वार्धेसुखंदद्युः ॥ चरमेवर्ष
स्योत्तरार्धेत्वनिष्टंअशुभफलंदद्युः ॥ अथविपरीतायांउक्तवैपरीत्येविलोमंविपरीतंफलंदद्युः ॥ तद्यथा ॥ येग्रहाःजन्मकाले
निर्बलाःवर्षकालेसबलास्तेवर्षपूर्वार्धेअनिष्टंफलंदद्युः ॥ वर्षोत्तरार्धेसुखंदद्युः ॥ उभयत्रसाम्येतुल्यंफलंस्यात् ॥ तद्यथा ॥

येग्रहाजन्मकालेवर्षकालेपिवलिष्ठास्तेसंपूर्णेवर्षेशुभंफलंदद्युः ॥ येग्रहाजन्मकालेवर्षकालेचनिर्बलास्तेसंपूर्णेवर्षेदुःखमेवदद्युः ग्रहजनितंसर्वंफलंतत्तद्ग्रहदशायामंतर्दशायांवाच्यमितितत्त्वम् ॥ ९ ॥ इतिव्ययभावविचारः ॥ ॥ अथाधिकारोपसंहारमाह ॥ श्रीगर्गेति ॥ स्पष्टम् ॥ १० ॥ इतिदिवाकरविरचितवर्षतंत्रटीकायांद्वादशभावविचारःसमाप्तः ॥ ॥ अथदशाध्यायोव्या

श्रीगर्गान्वयभूषणोगणितविच्चिंतामणिस्तत्सुतोऽनंतोऽनंतमतिर्व्यधात्खलमतिध्वस्त्यैजनुः पद्धतिम् ॥ तत्सूनुःखलुनीलकंठविबुधोविद्वच्छिवानुज्ञयासत्तुष्ट्यैव्यदधाद्विवेचनमिदंभावेपुसत्ताजिकात् ॥१०॥ ॥ अथदशाक्रमविचारः॥स्पष्टान्सलग्नान्खचरान्विधायराशीन्विनात्यल्पलवंतुपूर्वम् ॥ निवेश्यतस्मादधिकाधिकांशंक्रमादयंस्यात्तुदशाक्रमोऽब्दे ॥१॥ ऊनंविशोध्याधिकतःक्रमेणशोध्यंविरुद्धांशकशेषकैक्यम् ॥ सर्वाधिकांशोन्मितमेवतत्स्यादनेनवर्षस्यमितिस्तुभाज्या ॥ २ ॥ शुद्धांशकास्तान्गुणयेदनेनलब्धध्रुवांकेनभवेद्दशायाः ॥ मानंदिनाद्यंखलुसद्ग्रहस्यवलान्यथासांनिगदेत्तुशास्त्रात् ॥ ३ ॥ ॥ ॥

ख्यायते ॥ तत्रदशासाधनंपूर्वमेवोक्तं ॥ अथदशाफलान्याह ॥ तत्रपूर्णमध्याधमनष्टवलानांग्रहाणांफलपद्यानिस्पष्टार्थानि ॥ १ ॥ २ ॥ ३ ॥ ॥ ॥ ॥ ॥ ॥

शुद्धांशसाम्येवलिनोदशाद्यावलस्यसाम्येऽल्पगतेस्तुपूर्वा ॥ साम्येविलग्नस्यखगेनचिंत्यावलाधिका
लग्नपतेर्विचिंत्या ॥ ४ ॥ हेममुक्ताफलद्रव्यलाभमारोग्यमुत्तमम् ॥ कुरुतेस्वामिसन्मानंदशालग्नस्य
शोभना ॥५॥ लाभंद्दष्टेनवित्तस्यमानहीनस्यसेवनं ॥ मनसोविकृतिंकुर्याद्दशालग्नस्यमध्यमा ॥६॥
विदेशगमनंक्लेशंबुद्धिनाशंकदव्ययम् ॥ मानहानिंकरोत्येवकष्टालग्नदशाफलं ॥ ७ ॥ क्रूरलग्नदशा
मध्यासौख्यंस्वल्पंधनव्ययं ॥ अंगपीडांत्वपुष्टिंचकुरुतेमृत्युविग्रहम् ॥८॥ अथरविदशाफलं ॥ दशा
रवेःपूर्णवलस्यलाभंगजाश्वहेमांवररत्नपूर्णम् ॥ मानोदयंभूमिपतेर्ददातियशश्चदेवद्विजपूजनादेः
॥ ९ ॥ दशारवेर्मध्यवलस्यपूर्वमिदंफलंमध्यमेवदत्ते ॥ ग्रामाधिकारव्यवसायधैर्यैःकुलानुमानाच्च
सुखादिलाभः ॥ १० ॥ दशारवेरल्पवलस्यपुंसांददातिदुःखंस्वजनैर्विवादात् ॥ मतिभ्रमंपित्तरुजं
स्वतेजोविनाशनंधर्पणमप्यरिभ्यः ॥ ११ ॥ दशारवेर्नष्टवलस्यपुंसांनृपाद्रिपोर्वाभयमर्थनाशम् ॥
स्त्रीपुत्रमित्रादिजनैर्विवादंकरोतिबुद्धिभ्रममामयंच ॥ १२ ॥ ॥ ॥ ॥

॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ ॥ ॥ ॥

अथसूर्यस्यस्थानविशेषावस्थित्याफलतारतम्येनदशाफलमाह ॥ लग्नादिति ॥ लग्नाद्रविःसूर्यःनिंद्योपिनष्टवलोपित्रिदशाय संस्थःषष्ठतृतीयदशमैकादशस्थानसंस्थःसन्नर्धमेवशुभफलंस्वदशायांदत्तेददातीत्यर्थः । एवंषट्त्रिदशायसंस्थोरविरूनःहीन वलोपिसन्मध्यत्वंमध्यमफलदःस्यात् ॥ एवमुपचयस्थानगतोमध्योमध्यमवलोपिशुभतांचशुभफलंददाति ॥ इत्थममुनाप्र

लग्नाद्रविःषट्त्रिदशायसंस्थोनिंद्योपिदत्तेशुभमर्धमेव ॥ मध्यत्वमूनःशुभताचमध्योयातीत्थमत्यंत शुभःशुभःस्यात् ॥१३॥ अथचंद्रदशाफलम् ॥ इंदोर्दशापूर्णवलस्यदत्तेशुक्लांवररत्नमणिमौक्तिका द्यम् ॥ स्त्रीसंगमंराज्यसुखंचभूमिलाभंयशःकांतिवलाभिवृद्धिम् ॥ १४ ॥ इंदोर्दशामध्यवलस्यसर्व मिदंफलंमध्यममेवदत्ते ॥ वाणिज्यमित्रांवरगेहसौख्यंधर्मेमतिंकर्पणतोऽन्नलाभम् ॥१५॥ इंदोर्द शास्वल्पवलस्यदत्तेकफामयंकांतिविनाशमाहुः ॥ मित्रादिवैरंजननंकुमार्याधर्मार्थनाशंसुखमल्प मत्र ॥ १६ ॥ इंदोर्दशानष्टवलस्यलोकापवादभीतिंधनधर्मनाशम् ॥ शीतामयंस्त्रीसुतमित्रवैरंदौ स्थ्यंचदत्तेविरसान्नभुक्तिम् ॥ १७ ॥ ॥ ॥ ॥ ॥

कारेणोपचयस्थानगःशुभःपूर्णवलःअत्यंतंशुभःस्यात् ॥ एतत्स्थानरहितोरविःअन्यस्मिन्स्थानेयथोक्तफलदःस्यात् । एवं सर्वत्रव्याख्या ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ ॥ ॥ ॥ ॥

पष्ठाष्टमांत्येतरराशिसंस्थोनिंद्योपिदत्तेऽर्थसुखंदशायाम् ॥मध्यत्वमूनःशुभतांचमध्योयातीत्थमिंदुः सुशुभःशुभःस्यात् ॥१८॥ ॥ अथभौमदशाफलम् ॥ दशापतिःपूर्णवलोमहीजःसेनापतित्वंतनुते नराणाम् ॥ जयंरणेविद्रुमहेमरत्नवस्त्रादिलाभंप्रियसाहसत्वम् ॥ १९ ॥ दशापतिर्मध्यवलोमहीजः कुलानुमानेनधनंददाति ॥ राजाधिकारोप्यथतत्परत्वंतेजस्विताकांतिवलाभिवृद्धिं ॥ २० ॥ दशा पतिःस्वल्पवलोमहीजोददातिपित्तोष्णरुजंशरीरे ॥ रिपोर्भयंवंधनमास्यतोऽसृक्स्रवंचवैरंस्वजनैश्च शश्वत् ॥ २१ ॥ दशापतिर्नष्टवलोमहीजोविवादमुग्रंजनयेद्व्रणंवा ॥ चौराद्भयंरक्तरुजंज्वरंचविप त्तिमन्यस्वहृतिंचखर्जूम् ॥ २२ ॥ त्रिषडायगतोभौमोनष्टवीर्यःशुभार्धदः ॥ मध्योहीनशुभोमध्यः शुभोऽत्यंतंशुभावहः ॥ २३ ॥ अथबुधदशाफलम् ॥ दशापतिःपूर्णवलोबुधश्चेद्यशोऽभिवृद्धिंगणि तात्सुशिल्पात् ॥ तनोतिसेवांसफलांनृपादेर्दूत्यंचवैदूष्यगणोदयंच ॥ २४ ॥ दशापतिर्मध्यवलोबु धश्चेद्गुरोःसुहृद्भ्योलिपिकाव्यशिल्पैः ॥ धनाप्तिदायीसुतमित्रवंधुसमागमान्मध्यममेवसौख्यम् ॥२५॥





॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ ॥ ॥ ॥

दशापतौस्वल्पबलेबुधेस्यान्मानस्यनाशःस्वजनापवादः ॥अकार्यकोपस्खलनाद्यनिष्टंधनव्य
यंरोगभयंचविंद्यात्॥२६॥दशापतौहीनवलेबुधेस्यात्स्वबुद्धिदोषोवधबंधभीतिः॥दूरेगतिर्वा
तकफामयार्चिर्निखातवित्तस्यचनापिलाभः ॥२७॥ पडष्टांत्येतरर्क्षस्थोनष्टोज्ञोऽर्धशुभप्रदः ॥
मध्योहीनःशुभोमध्यःशुभोत्यंतंशुभावहः ॥२८॥ अथगुरुदशाफलं॥ गुरोर्दशापूर्णवलस्यद
त्तेमानोदयंराजसुहृद्गुरुभ्यः॥कीर्त्यर्थलाभोपचयंसुखानिराज्यंसुतार्तिंरिपुरोगनाशम्॥२९॥
गुरोर्दशामध्यवलस्यधर्मैर्मतिंसखित्वंनृपमंत्रिवर्गैः॥ तनोतिमानार्थसुखाभिलाभंसिद्धिंसदु
त्साहबलातिरेकाम् ॥३०॥ दशागुरोरल्पवलस्यदत्तेरोगंदरिद्रत्वमथारिभीतिम् ॥ कर्णामयं
धर्मधनप्रणाशंवैराग्यमर्थंचगुणंनकिंचित्॥३१॥ गुरोर्दशानष्टवलस्यपुंसांददातिदुःखानिरु
जंकफार्तिम् ॥ कलत्रपुत्रस्वजनारिभीतिंधर्मार्थनाशंतनुपीडनंच ॥ ३२ ॥ पडष्टरिःफेतर
गोगुरुर्निंद्योर्धसत्फलः ॥ मध्योहीनःशुभोमध्यःशुभोऽत्यंतंशुभावहः ॥ ३३ ॥ ॥

॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥ ३३ ॥ ॥ ॥ ॥

अथशुक्रदशाफलं ॥ दशाभृगोःपूर्णवलस्यसौख्यंस्त्रग्गंधहेमांवरकामिनीभ्यः ॥ हयादिलाभःसुत
कीर्तितोषानैरुज्यगांधर्वरतिःपदाप्तिः ॥३४॥ दशाभृगोर्मध्यवलस्यदत्तेवाणिज्यतोर्थागमनंकृपेश्च॥
मिष्टान्नपानांवरभोगलाभंमित्रांश्चयोषित्सुतसौख्यलाभम् ॥ ३५ ॥ दशाभृगोरल्पवलस्यदत्तेमति
भ्रमंज्ञानयशोऽर्थनाशम् ॥ कदन्नभोज्यंव्यसनामयार्तिंस्त्रीपक्षवैरंकलिमप्यरिभ्यः ॥ ३६ ॥ दशा
भृगोर्नष्टवलस्यदत्तेविदेशयानंस्वजनैर्विरोधम् ॥ पुत्रार्थभार्याविपदोरुजश्चमतिभ्रमोपिव्यसनंमहच्च
॥३७॥ षडष्टरिःफेतरगोभृगुर्निंद्योऽर्धसत्फलः ॥ मध्योहीनःशुभोमध्यःशुभोऽत्यंतंशुभावहः ॥३८॥
अथशनिदशाफलम् ॥ दशाशनेःपूर्णवलस्यदत्तेनवीनवेश्मांवरभूमिसौख्यम् ॥ आरामतोयाश्रयनि
र्मितिश्चम्लेच्छातिसंगान्नृपतेर्धनाप्तिः॥३९॥ दशाशनेर्मध्यवलस्यदत्तेखरोष्ट्रपाखंडजतोधनाप्तिम् ॥
वृद्धांगनासंगमदुर्गरक्षाधिकारचिंताविरसान्नभोगः ॥ ४० ॥ दशाशनेःस्वल्पवलस्यपुंसांतनोति
दुःखंरिपुतस्करेभ्यः ॥ दारिद्र्यमात्मीयजनापवादंरोगंचशीतानिलकोपमुग्रम् ॥ ४१ ॥ ॥

॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥ ३८ ॥ ३९ ॥ ४० ॥ ४१ ॥ ॥ ॥ ॥

॥ ४२ ॥ ४३ ॥ अथलग्नदशाफलंवक्तुकामस्तावल्लग्नस्वामिफलानिचरादिलग्नगतद्रेष्काणवशेनफलतारतम्यंश्लोकाभ्यामाह ॥ दशातनोरिति ॥ तनोर्लग्नस्यदशास्वामिवलेनतुल्यं स्वस्वामिनोयादृशंवलंतादृशंफलंददाति ॥ अथलग्नदशायामपरोविशेषः ॥ चरेचरलग्नेसतिप्रथमेद्रेष्काणेयदितदाशुभा शुभफलदादशास्यात् ॥ यदिद्वितीयद्रेष्काणेलग्नंतदामध्यफलदादशास्यात् ॥ यदितृतीयद्रेष्काणेलग्नंतदा॥अधमफलदादशास्यात् ॥ द्विमूर्तिभे द्विस्वभावलग्नेअस्माच्चरलग्नाद्विपरीतमूह्यम् ॥

दशाशनेर्नष्टवलस्यपुंसामनेकधातुव्यसनानिदत्ते ॥ स्त्रीपुत्रमित्रस्वजनैर्विरोधंरोगाभिवृद्धिं मरणेनतुल्यम् ॥ ४२ ॥ त्रिषष्ठलाभोपगतोमंदोनिंद्योर्धसत्फलः ॥ मध्योहीनःशुभोमध्यः शुभोऽत्यंतंशुभावहः ॥ ४३ ॥ दशातनोःस्वामिवलेनतुल्यंफलंददातीत्यपरोविशेषः ॥ चरे शुभामध्यफलाऽधमाचद्विमूर्तिभेस्माद्विपरीतमूह्यम् ॥४४॥ अनिष्टमिष्टंचसमस्थिरर्क्षेक्रमाद्दृकाणैःफलमुक्तमाद्यैः ॥ सत्स्वामियोगेक्षणतःशुभंस्यात्पापेक्षणात्कष्टफलंचवाच्यम् ॥४५॥

तद्यथा ॥ द्विस्वभावराशौलग्नंप्रथमद्रेष्काणेदशाअधमफलदा ॥ द्वितीयद्रेष्काणेतदादशामध्यमफलदा ॥ तृतीयद्रेष्काणे तदाशुभफलदास्यादित्यर्थः ॥ ४४ ॥ अनिष्टमिति ॥ स्थिरर्क्षेस्थिरराशौलग्नगतेयदिप्रथमद्रेष्काणस्तदानिष्टमनिष्टफलदा दशा ॥ यदिद्वितीयोद्रेष्काणस्तदाइष्टंउत्तमफलदादशा ॥ यदितृतीयद्रेष्काणस्तदासमंमध्यमफलदादशेत्यर्थः ॥ क्रमादाद्यैः

पूर्वाचार्यैर्द्रेष्काणैर्द्रेष्काणवशाल्लग्नदशायाःफलमुक्तं ॥ अथापवादमाह ॥ सत्स्वामीति ॥ तल्लग्नंसच्छुभग्रहःस्वामिनाचयोगे क्षणतःयुतमीक्षितंचेत्स्यात्तदाअशुभफलमपिशुभंस्यात् ॥ शुभंचेच्छुभतरंस्यात् ॥ यदितल्लग्नंपापेक्षणात् पापग्रहैःस्वामिव्य तिरिक्तैर्दृष्टंयुतंवाचेत्स्यात्तदाकष्टफलंवाच्यम् ॥ अत्रचतुर्विधग्रहवलवशाद्दशाफलंवाच्यं ॥ तद्यथा ॥ पंचदशविंशोपकाधिको ग्रहोविंशत्यंशावधिपूर्णवलः दशविंशोपकाभिकोग्रहःपंचदशविंशोपकावधिमध्यवलः पंचविंशोपकाधिकोदशावधिअधमव

दशामानंसमामानंप्रकल्प्योक्तेनवर्त्मना ॥ अंतर्दशाःसाधनीयाःप्राक्पात्यांशवशेनतु ॥ ४६ ॥ आदावंतर्दशापाकपतेस्तत्क्रमतोऽपराः ॥ शुभेक्षणान्वयान्मैत्र्यात्तत्फलंपरिचिंतयेत् ॥ ४७ ॥ चंद्रारजीवाःसौम्येज्यशुक्रारविविधूतथा ॥ मंदेज्यशुक्रसूर्येंदुभौमाःसौम्येज्यसूर्यजाः ॥ ४८ ॥ जीवज्ञशुक्राःसूर्यादेःशुभाअंतर्दशाइमाः ॥ अन्येपामशुभाज्ञेया इतिवामनभाषितं ॥ ४९ ॥ इतिग्रहदशाफलानि ॥ ॥ ॥ ॥

लः पंचविंशोपकादूनेनष्टवलइति ॥ उक्तंचवामनेन ॥ पूर्णमध्याधमानष्टान्ग्रहोक्षान्वादशाफलं ॥ तत्क्रमेणैववक्ष्यामिप्रत्येकं चचतुर्विधमिति ॥ इतिदशाफलानि ॥ ग्रहदशास्वंतर्दशासाधनंपूर्वमेवोक्तम् ॥ ४५ ॥ ४६ ॥ ४७ ॥ ४८ ॥ ४९ ॥ इतिदिवाकरविरचितेदशांतर्दशाध्यायः ॥ ॥ ॥ ॥ ॥

अथसकलभावस्थग्रहफलान्याह ॥ तत्रतावल्लग्नस्थितसकलग्रहफलमाह ॥ सूर्यारेति ॥ सूर्यभौमशनयःप्रत्येकंसामुदायिकं वातनुगालग्नगतायदिस्युस्तदाज्वरार्तिज्वरपीडाधनक्षयंचकुर्युः ॥ इत्थममुनाप्रकारेणपापयुगिंदुःपापग्रहयुक्तइंदुश्चेत्तथापिज्व रार्तिंधनक्षयंचकुर्यात् ॥ यदाचंद्रःपुष्टतनुःवर्धमानतनुःशुभान्वितःशुभग्रहैर्युक्तश्चलग्नगःसन्सौख्यंकरोति ॥ तथाजीवज्ञशु

अथभावस्थग्रहफलान्युच्यंते ॥ सूर्यारमंदास्तनुगाज्वरार्तिंधनक्षयंपापयुगिंदुरित्थम् ॥ शुभान्वितः पुष्टतनुश्चसौख्यंजीवज्ञशुक्राधनधान्यलाभम् ॥ ५० ॥ चंद्रज्ञजीवास्फुजितोधनस्थाधनागमंराज्य सुखंचदद्युः ॥ पापाधनस्थाधनहानिदाःस्युर्नृपाद्भयंकार्यविघातमार्किः ॥ ५१ ॥ दुश्चिक्यगाःखल खगाधनधर्मराज्यलाभप्रदाबलयुताःक्षितिलाभदाःस्यु ॥ सौम्याःसुखार्थसुतमानयशोविलासला भायहर्षमतुलंकिलतत्रचंद्रः ॥ ५२ ॥ चंद्रःसुखेखलयुतोव्यसनंरुजंचपुष्टःशुभेनसहितःसुखमातनो ति ॥ सौम्यःसुखंविविधमत्रखलाःसुखार्थनाशंरुजंव्यसनमप्यतुलंभयंच ॥५३॥ पुत्रवित्तसुखसंचयं शुभाःपुत्रगाभृगुसुतोऽतिहर्षदाः ॥ पुत्रवित्तधनबुद्धिहारकास्तस्करामयकलिप्रदाःखलाः ॥५४॥

कालग्नगाश्चेत्स्युस्तदाधनराज्यलाभंकुर्युः ॥ ५० ॥ अथधनभावस्थितसकलग्रहफलमाह ॥ चंद्रेतिस्पष्टं ॥ अष्टमभावफल पर्यंतंस्पष्टं ॥ ५१ ॥ ५२ ॥ ५३ ॥ ५४ ॥ ॥ ॥ ॥

॥ ५५ ॥ ५१ ॥ ५७ ॥ अथनवमभावगतमफलमहफलमाह ॥ तपसीति ॥ तपसिनवमस्थानेखलेगेपापग्रहेसतिसोदरभी पशुपीडनंचस्यात् ॥ अत्रनेदरविःसूर्यस्तदातिमुदःहर्षयुक्तोभवति ॥ रवेस्तत्रहर्षस्थानस्थितत्वात् ॥ शुभखगाःशुभग्रहानवमस्था

षष्ठेपापावित्तलाभंसुखासिंभोमेऽस्तंतंहर्षदःशत्रुनाशं॥ सौम्याभीतिंवित्तनाशंकलिंचचंद्रोरोगंपापयु
क्तःकरोति॥५५॥सपापःशशीसप्तमोव्याधिभीतिंखलाःस्त्रीविनाशंकलिंभृत्यभीतिम्॥शुभाःकुर्वते
वित्तलाभंसुखाप्तिंयशोराजमानोदयंबंधुसौख्यम् ॥ ५६ ॥ चंद्रोऽष्टमेनिधनदःखलखेटयुक्तःपापाश्च
तत्रमृतितुल्यफलंचविंद्यात् ॥ सौम्याःस्वधातुवशतोरुजमर्थहानिंमानक्षयंमुथशिलेशुभजेशुभंच
॥५७॥ तपसिसोदरभीःपशुपीडनंखलखगेतिमुदोरविरत्रचेत् ॥ शुभखगाधनधर्मविवृद्धिदाःखल
खगेपिशुभान्यपरेजगुः॥५८॥ गगनगोरविजःपशुवित्तहारविकुजौव्यवसायपराक्रमौ ॥ धनसुखा
निपरेनधनात्मजाऽवनिपसंगसुखानिवितन्वते ॥ ५९ ॥ लाभेधनोपचयसौख्ययशोभिवृद्धिंसन्मित्र
संगबलपुष्टिकराश्चसर्वे॥क्रूरावलेनरहिताःसुतवित्तबुद्धिनाशंशुभास्तुतनुतांस्वफलस्यकुर्युः ॥६०॥

नरथाःधनधर्मविवृद्धिदाः खलखगेपिनवमस्थानस्थेमतिशुभाशुभफलदाइत्यपरेजगुः ॥ ५८ ॥ द्वादशपर्यंतंस्पष्टं हर्षविवृ द्धिमत्रेतिद्वादशस्थानेहर्षस्थानत्वात् ॥ ५९ ॥ ६० ॥ ॥ ॥ ॥

॥ ६१ ॥ ६२ ॥ इतिवर्षतंत्रटीकायांभावफलाध्यायः ॥ अथमासदिनप्रवेशफलाध्यायः ॥ तत्रसंज्ञातंत्रोक्तप्रकारेणमासदिनप्रवेशकालौनिर्णीयअधिकारिनिर्णयंश्लोकषट्केनाह ॥ मासेतिषड्भिः ॥ मासप्रवेशकालेपूर्वोक्तप्रकारेणग्रहान्भावश्चांतन्वादिद्वादशभावांश्चसाधयेत् ॥ तदनंतरंमासपतिनिर्णयार्थंषडधिकारिणोविचार्यास्तद्यथा ॥ तत्रएकःमासतनोर्नाथोमासलग्नस्वामी ॥ द्वितीयःमुथहेशोवर्षकालीनमुथहासार्धद्व्यांशगणितगतमाससंख्यायायुतासामासमुथहाज्ञेयातस्याःस्वामी ॥

पापाव्ययेनेत्ररुजंविवादंहानिंधनानांनृपतस्करादेः ॥ सौम्याव्ययंसद्व्यवहारमार्गेकुर्युःशनिर्हर्षविवृद्धिमत्र ॥ ६१ ॥ इतिभावस्थग्रहफलानि ॥ श्रीगर्गान्वयभूषणोगणितविच्चिंतामणिस्तत्सुतोऽनंतोऽनंतमतिर्व्यधात्खलमतिध्वस्त्यैजनुःपद्धतिम् ॥ तत्सूनुःखलुनीलकंठविबुधोविद्वच्छिवानुज्ञयाभावस्थग्रहपाकदौःस्थ्यसुखतायुक्तंफलंसोऽभ्यधात् ॥६२॥३॥ ॥ अथमासप्रवेशफलानि ॥ मासार्कस्यतदासन्नपंक्तिस्थेनसहांतरम् ॥ कलीकृत्वार्कगत्याप्तंदिनाद्येनयुतोनितम् ॥ १ ॥ ॥

तथातृतीयोजन्मलग्नस्वामी ॥ चतुर्थस्त्रिराशिपःत्रिराशिकस्वामी ॥ तथादिननिशोरवींदुभपतिःपंचमःदिवसेमासप्रवेशश्चेत्सदासूर्याक्रांतराशिस्वामी रात्रौमासप्रवेशश्चेत्तदाचंद्राक्रांतराशिस्वामी । तथावर्षप्रवेशलग्नस्वामीषष्ठः । एषांषण्णामधिकारिणांमध्येवीर्याधिकःबलाधिकःसन् तनुंलग्नंपश्यन्सःमासपतिः सएवमासस्वामीज्ञेयः ॥ लग्नमनीक्षमाणेत्यादिपूर्ववज्ज्ञेयम् ॥

इतःमासपतेः सकाशाच्छुभाशुभंफलंवाच्यं ॥ अत्रापरेआचार्याः मासलग्नस्वामिनमेवमासस्वामीत्यूचिरेउक्तवंतः ॥ तेषांम तेपूर्वोक्ताधिकारिणःसंत्येव ॥ तथाअन्येषांमतेदिनलग्नेशंदिनप्रवेशलग्नस्वामिनंदिनेशं विचक्षणाःदैवज्ञाःप्रोचुः ॥ अत्रापि अधिकारिनिर्णयोनास्त्येव ॥ एवंनिर्णीतयोर्मासदिनप्रवेशस्वामिनोःफलंवर्षेशवद्बुधैर्वाच्यम् ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥

तत्पंक्तिस्थंवारपूर्वंमासार्केऽधिकहीनके ॥ तद्वाराद्येमासवेशोद्युवेशोप्येवमेवहि ॥ २ ॥ मासप्रवेश कालेज्ञोग्रहान्भावांश्चसाधयेत् ॥ तत्रमासतनोर्नाथोमुंथहोजन्मपस्तथा ॥ ३ ॥ त्रिराशिपोदिननि शोरवींदूभपतिस्तथा ॥ अब्दप्रवेशलग्नेशएषांवीर्याधिकस्तनुम् ॥ ४ ॥ पश्यन्मासपतिर्ज्ञेयस्ततोवा च्यंशुभाशुभम् ॥ अपरेमासलग्नेशंमासाधिपतिमूचिरे ॥ ५ ॥ दिनेशंदिनलग्नेशंतथाप्रोचुर्विच क्षणाः ॥ मासघस्रेशयोर्वाच्यंफलंवर्षेशवद्बुधैः ॥ ६ ॥ लग्नांशाधिपतिर्विलग्नपनवांशेशेनमैत्रींदृशा दृष्टोवासहितःशशीचयदितौमैत्रीदृशालोकते ॥ तस्मिन्मासितनौसुखंबहुविधंनैरुज्यमित्थंफलंता वद्यावदिमेस्युरित्थमथतान्संचार्यवाच्यंफलम् ॥ ७ ॥ ॥ ॥ ॥

॥ ६ ॥ अथमासफलमाह ॥ लग्नांशाधिपतिरिति ॥ लग्नांशाधिपतिः मासलग्नगतनवांशस्वामी विलग्नपनवांशेशेनमासल ग्नस्वामीग्रहाक्रांतराशितनवांशस्वामिना शुभग्रहेणपापग्रहेणवा मैत्रीदृशामित्रदृशा तृतीयैकादशनवमपंचमदृष्ट्यादृष्टोवा

युक्तश्चेत्स्यात् । चपुनः शशीचंद्रः यदितौमासलग्नस्वामिमासलग्ननवांशस्वामिनौ मैत्रीदृशामित्रदृष्ट्याआलोकतेपश्यतितदा तस्मिन्मासितनौशरीरेनानाविधंवहुप्रकारंसुखंनीरोगताचस्यात् ॥ इत्थममुनाप्रकारेणमासफलंतावत्कालपर्यंतंस्यात् यावदिमेग्रहाः लग्ननवांशस्वामिलग्नेश्वरांशस्वामिनौचंद्रश्च इत्थमेवंप्रकारकाःस्युः ॥ अयमर्थः ॥ एषांत्रयाणांप्रत्यहंगच्छतांयावत्तद्राशिसंचारस्तावत्कालपर्यंतंशुभफलंवाच्यं ॥ ७ ॥ अथानिष्टफलमाह ॥ तौचेच्छत्रुदृशेति ॥ तौलग्नांशनाथलग्नेश्वरांशनाथौचेत्मिथः परस्परंशत्रुदृशा चतुर्थदशमैकसप्तदृष्ट्यादृष्टौ पुनस्तादृशौशशिनाचंद्रेणापिशत्रुदृष्ट्यादृष्टौसंतौ मनोदुःखदौ

तौचेच्छत्रुदृशामिथश्चशशिनादृष्टौमनोदुःखदौरोगाधिक्यकरौचकश्चिदन
योर्नीचोस्तगोवायदि ॥ कष्टात्सौख्यमिहद्वयंयदिपुनर्नीचास्तगंस्यान्मृतिः
सूत्यब्दोद्भवरिष्टतोमृतिसमंस्यादन्यथेत्यूचिरे ॥ ८ ॥ ॥ ॥

मनसोदुःखकरौरोगाधिक्यकरौचस्यातां ॥ अनयोर्लग्नांशनाथलग्नेश्वरांशनाथयोर्मध्येयःकश्चिन्नीचोनीचराशिगतोऽस्तंगतोवायदिस्यात्तदाकष्टात्सौख्यं कष्टंप्राप्यपश्चात्सौख्यदःस्यात् ॥ इहयदिद्वयंतौद्वावपिपुनः नीचास्तगौनीचगामिनौअस्तंगतौ वा अथवाएकःनीचगः अपरःअस्तंगतोवातदामृतिर्मरणंस्यात् ॥ सूतौजन्मकाले अब्देवर्षकालेचरिष्टयोगोत्पत्तिःस्यात् ॥ अन्यथाजन्मकालवर्षकालयोरिष्टयोगाभावस्तदामृतिसमंकष्टंस्यादित्यूचिरेउक्तवंतः ॥ ८ ॥ ॥ ॥

अथमासलग्नसंबंधिशुभाशुभफलमुक्त्वाइदानींधनभवनादिद्वादशांतेषुभावेषुताहशमेवशुभाशुभफलमाह ॥ भावांशाधिप तिरिति ॥ भावांशाधिपतिः मासलग्नेयद्भावविचारःक्रियते तद्भावनवांशस्वामीस्वभावपनवांशेशेन तद्भावस्वामिनानवांश स्वामिनामैत्रीदृशामित्रदृष्ट्यादृष्टोवासहितोयुक्तोवाभवेत्तत्रशशीचंद्रोपियदितौद्वौभावनवांशस्वामिभावस्वामिनवांशस्वामि नौमित्रदृष्ट्यालोकतेपश्यतितदातद्भावोत्थसुखंतस्मिन्मासिभवति ॥ अथतद्व्यत्यासतःविलोममिति ॥ तद्यथा ॥ यदा तौद्वौग्रहौशत्रुदृष्ट्यादृष्टौयुक्तौवाभवतस्तौचेचंद्रोपिशत्रुदृष्ट्यापश्यति ॥ तदाविलोमंविपरीतंतद्भावसंबंधिकष्टंतस्मिन्मासि

भावांशाधिपतिःस्वभावपनवांशेशेनमैत्रीदृशादृष्टोवासहितःशशीचयदितौमैत्रीदृशालोक ते ॥ तद्भावोत्थसुखंविलोक्यमथतद्व्यत्यासतःकीर्तितंनीचास्तादिफलंचलग्नवदिदंविद्वद्भि रूह्यंधिया ॥ ९ ॥ लग्नेशमासेशसमेश्वरांशनाथायदंशाधिपमित्रदृष्ट्या ॥ दृष्टायुतावाश शिनाचतत्तद्भावोत्थसौख्यायनचेदनिष्टम् ॥ १० ॥ ॥ ॥

कीर्तितंकथितं ॥ इदंनीचास्तादिफलंचलग्नवत्धियाबुद्ध्याविद्वद्भिरूह्यंज्ञातव्यम् ॥ तद्यथा ॥ तयोर्द्वयोर्मध्येएकोनीचगः अस्तगोवाभवेत्तदातद्भावसंबंधिदुःखमनुभूयपश्चात्सुखंप्राप्नोति ॥ यदातुद्वावपिनीचगावस्तगौवातदातस्मिन्मासितद्भावोत्थ दुःखप्राप्तिरेवस्यात् ॥ ९ ॥ अथप्रकारांतरेणतद्भावसौख्यमाह ॥ लग्नेशेति ॥ लग्नेशोवर्षलग्नस्वामी ॥ मासेशःमासस्वामी समेश्वरोवर्षस्वामीअंशनाथः मासलग्नस्यांशस्वामीएतेचत्वारोयत्यस्ययस्यभावस्यांशाधिपनवांशस्वामिनास्वामिभ्यांस्वामीवा

मित्रदृष्ट्यादृष्टोयुतोवा तथैतेपुनः शशिनाचंद्रेणमित्रदृष्ट्यादृष्टायुक्तावाचेत्स्युस्तद्भावोत्थसौख्याय तस्यतस्यभावस्यधनसह जादेःसौख्यंस्यात् ॥ नचेदनिष्टमिति ॥ अनिष्टंभवति ॥ १० ॥ अथकेवललग्ननवांशवशादेवतत्तद्भावजशुभाशुभफलमाह ॥ निर्बलाइति ॥ एषांव्ययषष्ठाष्टांशपाः व्ययभावषष्ठभावाष्टमभावानामनिष्टानामंशपाःनवांशस्वामिनश्चेन्निर्बलाःस्युस्तदास त्फलदायकाः तद्भावेभ्यःशुभफलदायकाःस्मृताः ॥ अन्येउर्वरितभावानांनवांशस्वामिनःसवीर्याबलिष्ठाश्चेत्स्युस्तदात त्तद्भावेभ्यःशुभदाः शुभफलदातारःस्युः ॥ व्यत्ययेव्यत्ययइति यदाव्यत्ययेनषष्ठाष्टमभावनवांशस्वामिनःसबलाश्चेत्स्युस्त

निर्बलाव्ययषष्ठाष्टांशपाःसत्फलदायकाः ॥ अन्येसवीर्याःशुभदाव्यत्ययेव्य
त्ययःस्मृतः ॥११॥ लग्नेशमासेशसमेशमुंथाधीशाःषडष्टोपगताःसपापाः ॥
दृष्टाःखलैःशत्रुदृशात्रमासेव्याध्यादिविद्विड्भयदुःखदाःस्युः ॥ १२ ॥ ॥

दादुष्टफलदातारःस्युः ॥ तथाअन्यभावनवांशस्वामिनश्चेन्निर्बलाःस्युस्तदादुष्टफलदातारइत्यर्थः ॥ ११ ॥ अथाधिग्रहाणां विरुद्धस्थानावस्थित्यानिष्टफलमाह ॥ लग्नेशेति ॥ लग्नेशःवर्षलग्नस्वामी मासेशःमासस्वामी समेशोवर्षस्वामी मुंथाधीशो मुंथास्वामीएतेचत्वारःषडष्टोपगताःषष्ठाष्टमस्थानस्थिताःसंतःसपापाःपापग्रहयुक्ताःखलैःपापग्रहैः शत्रुदृशाचतुर्थदशमैकसप्त मदृष्ट्यादृष्टाः अत्रअस्मिन्मासेव्याधिद्विड्भयदुःखंव्याधिशत्रूद्भवदुःखदाःस्युः ॥ १२ ॥ ॥ ॥

अथैपामेव अधिकारिग्रहाणांविहितस्थानावस्थित्याशुभाशुभफलमाह ॥ केंद्रत्रिकोणायेति ॥ वर्षलग्नेशमासेशवर्षेश्वराःबलि नःकेंद्रत्रिकोणायगताःकेंद्राणिलग्नचतुर्थसप्तमदशमस्थानानित्रिकोणंनवमपंचमंआयमेकादशमेतदन्यतमस्थानस्थिताः।क्रमे णान्वयः।सर्वेपांशुभस्थानानांसाधारण्यात्।शेपंस्पष्टं ॥ १३ ॥ अथमतांतरमाह ॥ इंथिहालग्नयोरिति ॥ इंथिहामासमुंथहा लग्नपयोर्मासलग्नपयोर्मध्येवलीराशिःतत्रतस्मिन्राशौयेहद्दांशस्वमिनःतेस्वांशतुल्यैर्दिनैर्दशास्वामिनोभवंति पाठक्रमेण ॥ एयमागमान्मूलशास्त्रात्कैश्चिदुक्तं ॥ १४ ॥ अथान्यैरेतद्दूषितमित्याह ॥ रवींद्वोरिति ॥ परेआचार्याःएतत्पूर्वमतंसूर्यचंद्र

केंद्रत्रिकोणायगतास्तुलग्नमासाब्दपावीर्ययुतानराणाम्॥नैरुज्यशत्रुक्षयराज्यलाभमानोदयात्यद्भु तकीर्तिदाःस्युः॥१३॥ इंथिहालग्नपोराशियोंवलीतत्रहद्दपाः॥ दशेशाःस्वांशतुल्याहैरित्युक्तंकैश्चि दागमात्॥१४॥रवींद्वोरसमावेशान्नैतद्युक्तंपरेजगुः॥दशांतरदशाच्छेदेफलमाब्दंतुयुज्यते॥१५॥ दिनप्रवेशकालेऽपिखेटान्भावांश्चसाधयेत् ॥ चंद्रलग्नांशकाभ्यांतुफलंतत्रवदेद्बुधः ॥१६॥ ॥

योःअसमावेशात्संबंधाभावात् ॥ युक्तंसत्नजगुःनेत्याहुः ॥ अथमासदशांतर्दशयोःफलमाह ॥ दशांतरदशाच्छेदइति ॥ दशांतर्दशायांवर्षदशांतरदशाविभागरीत्याकृतविभागेवर्षोक्तंदशाफलंवक्तुंयुक्तंभवति ॥ १५ ॥ अथदिनेशफलमाह ॥ दिन प्रवेशेति॥ दिनप्रवेशसमयेपिमासप्रवेशकालेनसमुच्चयार्थः।खेटान्सूर्यादिग्रहान्लग्नादिद्वादशांशादिभावान्साधयेत्कुर्यात् ॥ तत्रदिनप्रवेशेचंद्रलग्नयोर्नवांशाभ्यांबुधःपंडितःफलंशुभाशुभंकथयेत् ॥ १६ ॥ ॥ ॥ ॥

अथदिनस्वामिनिर्णयमाह ॥ चतुष्कमिति ॥ इंथिहेशादिचतुष्कंमुथहेश, जन्मलग्नेश, त्रैराशिकेश, दिनरात्रीशइतिच त्वारः। दिनमासाब्दलग्नपाःदिनलग्नेशमासलग्नेशवर्षलग्नेशाइतित्रयःइत्येषांसप्तानांमध्येयोबलीदिनलग्नंपश्येत्सदिनस्वामीबुधै रुक्तः ॥ १७ ॥ १८ ॥ १९ ॥ अथदिनेग्रहाणांशुभाशुभफलमाह ॥ लग्नांशकइति ॥ लग्नांशकःदिनलग्नांशराशिः सौम्यख

चतुष्कमिंथिहेशादिदिनमासाब्दलग्नपाः ॥ एषांबलीतनुंपश्यन्दिनेशःपरिकीर्तितः ॥१७॥ त्रिकोणकेंद्रायगताःशुभाश्चेचंद्रात्तनोर्वाबलिनःखलास्तु ॥ षट्त्र्यायगास्तत्रदिनेसुखानिविलासमानार्थयशोयुतानि ॥ १८॥ षडष्टरिःफोपगतादिनाब्दमासेन्थिहेशाःखलखेटयुक्ताः ॥ गदप्रदामानयशोहराश्चकेंद्रत्रिकोणायगताःसुखाप्त्यै॥१९॥लग्नांशकःसौम्यखगैःसमेतोदृष्टोपिवामित्रदृशेंदुनापि ॥ नैरुज्यराज्यादिशरीरपुष्टिर्मासोक्तिवद्दुःखमतोऽन्यथात्वे ॥२०॥ यदंशपःसौम्ययुतेक्षितोवास्निग्धेक्षणाद्भावजसौख्यकृत्सः ॥ दुःखप्रदःप्रोक्तवदन्यथात्वेसर्वेषुभावेष्वियमेवरीतिः ॥ २१ ॥ ॥

गैःशुभग्रहैःसमेतोयुक्तोऽथवादृष्टोमित्रदृशातृतीयैकादशनवमपंचमदृष्ट्याचंद्रेणापियुक्तस्तदृष्ट्यादृष्टस्तदानैरुज्येत्यादिस्पष्टं ॥ अतःअस्मात्कारणात् अन्यथात्वेमासोक्तिवत् चेत्तौशत्रुदृशेतिमासोक्तरीत्या वैपरीत्येदुःखंस्यात् ॥ २० ॥ अथोक्तरीतिभावफलार्थमतिदिशति ॥ यदंशपइति । यदंशपःकस्यभावस्यनवांशराशिःशुभग्रहैर्युक्तःस्नेहदृष्ट्यादृष्टोवासभावांशःतद्भावज

नितसौख्यकृत्स्यात् ॥ अन्यथात्वेवैपरीत्येप्रोक्तवत् ॥ पूर्वोक्तरीत्यादुःखदःस्यात् । इयंरीतिःसर्वेषुभावेषुज्ञेया ॥ २१ ॥ अथषष्ठद्वादशभावयोर्विशेषमाह ॥ षष्ठांशकइति ॥ षष्ठांशकःषष्ठभावस्यनवांशराशिः सौम्ययुक्तःशुभग्रहयुक्तःरोगदःरोगप्रदःस्यात् ॥ पापयुक्पापग्रहयुक्तः शुभःशुभफलदः ॥ व्ययांशेव्ययभावनवांशराशौशुभदृग्दृष्टेशुभदृष्ट्यातृतीयैकादशपंचमनवमस्थानदृष्ट्यादृष्टस्तदासद्व्ययःभवेत् ॥ पापतः पापग्रहयुक्तदृष्टःअसत् असन्मार्गेव्ययःस्यात् ॥ २२ ॥ जायांशइति ॥ जायांशःजायाभावस्यअंशकःशुभयुग्दृष्टः तदास्त्रीविलासादिसौख्यंस्यात् ॥ पापैःयुक्दृष्टःगृहकलिर्दुःखंस्यात् ॥ पापांतस्थे

षष्ठांशकःसौम्ययुतोरोगदःपापयुक्शुभः ॥ व्ययांशेशुभयुग्दृष्टेसद्व्ययःपापतस्त्वसत् ॥२२॥
जायांशःसौम्ययुग्दृष्टःस्वस्त्रीसौख्यविलासकृत्॥पापैर्गृहकलिर्दुःखंपापांतस्थेमृतिंवदेत्॥२३॥
शुभमध्यस्थितेत्र्यंशेबहुलंकामिनीसुखं ॥ स्वस्यारतिर्गुरावन्यखगेऽन्यासुरतिंवदेत् ॥२४॥
मृत्यंशेमृत्युगेसौम्यैर्युग्दृष्टेमरणंरणे ॥ मिश्रैर्मिश्रंखलैःसौख्यंवपैलमानुसारतः ॥ २५ ॥

पापग्रहमध्यवर्तीचेत्तदामृतिंवदेत् ॥ २३ ॥ अथान्यदाह ॥ शुभमध्यस्थितेत्र्यंशइति ॥ सप्तमभावनवांशराशिःशुभग्रहमध्यस्थितःबहुलंकामिनीसुखंस्यात् ॥ त्र्यंशस्थितेगुरौस्वस्यांस्वकीयकामिन्यांरतिंप्रीतिंवदेत् ॥ अन्यखगेत्र्यंशस्थेअन्यासुपरकीयकामिनीषुरतिंवदेत् ॥ २४ ॥ अथाष्टमभावफलमाह ॥ मृत्यंशइति ॥ मृत्यंशेअष्टमभावनवांशराशिः मृत्युगैःसौम्यैःविनमवेशलग्नेअष्टमस्थानस्थितैःशुभग्रहैर्युग्दृष्टेरणेमरणंभवेत् ॥ मिश्रैःशुभपापग्रहमिश्रमिश्रितैर्युग्दृष्टंमिश्रितंफलंवदेत् ॥

खलैः पापग्रहैर्युग्दृष्टेसौख्यंस्यात् ॥ वर्षलग्नानुसारतः ॥२५॥ अथकर्तरीयोगफलमाह ॥ द्विर्द्वादशइति ॥ द्विर्द्वादशेदिन प्रवेशलग्नाद्द्वितीयद्वादशस्थानेखलाःपापग्रहास्तदाहानिंद्रव्यादिनाशः ॥ व्ययेद्वादशस्थानेसौम्याःशुभग्रहाः तदाशुभव्ययंस द्व्ययमित्यर्थः ॥ पापजापापग्रहजनिताकर्तरीरोगंकरोति ॥ शुभजाशुभग्रहजनिताकर्तरीशुभंशुभफलदास्यात् ॥ २६ ॥ अथ चंद्रकृदनिष्टफलमाह ॥ लग्नइति ॥ लग्नेअष्टमस्थानेवाक्षीणेंदुः पापदृग्युतः पापग्रहदृष्टियुक्तःमृत्युदः ॥ अन्यत्स्पष्टम् ॥२७॥

द्विर्द्वादशेखलाहानिंव्ययेसौम्याःशुभव्ययम् ॥ कर्तरीपापजारोगंकरोतिशुभजाशुभम् ॥ २६ ॥
लग्नेऽष्टमेवाक्षीणेंदुर्मृत्युदःपापदृग्युतः॥रोगोवाग्रहणंवापिरिपुतःशत्रुभीरपि ॥२७॥ चंद्रेसभौमेनि धनारिसंस्थेनृणांभयंशस्त्रकृतंरिपोर्वा ॥ पापैर्मुखस्थैःपतनंगजाश्वयानात्तनौस्याद्बहुलाचपीडा ॥
॥ २८ ॥ शुभाद्यूनेविजयदाद्यूतादर्थसुखावहाः ॥ नवमेधर्मभाग्यार्थराजगौरवकीर्तिता ॥२९॥
दिनप्रवेशेऽस्तिविधुरवस्थायांतुयादृशि ॥ तदवस्थातुल्यमसौफलंदत्तेनसंशयः ॥ ३० ॥ ॥

अथान्यदाह । चंद्रेसभौमइति । स्पष्टं ॥२८॥ अथशुभफलमाह ॥ शुभाः द्यूनइति । शुभाः शुभग्रहाःद्यूनेसप्तमस्थानेस तिद्यूतात् जयदाजयप्रदाः ॥ अर्थेद्वितीयेस्थानेसुखावहाःनवमेनवमस्थानेधर्मेत्यादिस्पष्टं ॥ २९ ॥ अथदिनप्रवेशेचंद्राव स्थामाह ॥ दिनप्रवेशेऽस्तीति ॥ दिनप्रवेशेयादृशिअवस्थायांविधुश्चंद्रःअस्तितदवस्थातुल्यंफलंअसौदत्तेददाति नसंशयः संदेहोनास्तीत्यर्थः ॥ ३० ॥ ॥ ॥ ॥ ॥

अथावस्थानयनमाह ॥ विहायराशिंचंद्रस्येति ॥ चंद्रस्यराशिंविहायत्यक्त्वाशेषभागाद्विघ्नाद्विगुणाःकार्याःशरोद्धृताः पंचभिर्भक्ताःलब्धाःप्राप्तागताअवस्थाःस्युः याभोग्याएव्यातस्याःफलमादिशेत्कथयेत् ॥ ३१ ॥ अथश्लोकद्वयेनफलमाह ॥ प्रवासइति ॥ प्रवासावस्थायांगतेरात्रिनाथेचंद्रेप्रवासःस्यात् ॥ नष्टोपगेनष्टावस्थायांअर्थनाशःद्रव्यनाशः ॥ मृतावस्थायां मृत्युभीतिःस्यात् ॥ जयायामवस्थायांजयः ॥ हास्योपगेहास्यावस्थायांकामिनीभिर्विलासः ॥ रतौरत्यवस्थायांरतिः विषय

विहायराशिंचंद्रस्यभागाद्विघ्नाःशरोद्धृताः ॥ लब्धंगताअवस्थाःस्युर्भोग्यायाःफलमादिशेत् ॥ ३१ ॥ प्रवासःप्रवासोपगेरात्रिनाथेऽर्थनाशस्तुनष्टोपगेमृत्युभीतिः ॥ मृतावस्थितेस्याज्जयायांजयस्तुविलासस्तुहास्योपगेकामिनीभिः ॥ ३२ ॥ रतौस्याद्रतिःक्रीडितासौख्यदात्री प्रसुप्तापिनिद्रांकलिंदेहपीडां ॥ भयंतापहानीसुखंस्याच्चभुक्त्वाज्वराकंपितासुस्थितासुक्रमेण ॥ ३३ ॥ अथमृगयाविचारः ॥ सवीर्यौकुजज्ञौनृपाखेटसिद्ध्येनसिद्धिर्यदावीर्यहीनाविमौस्तः ॥ ॥ जलाखेटमाहुःसवीर्यैर्ग्रहर्क्षैर्जलाख्यैर्नगाख्यैर्नगाखेटमाहुः ॥ ३४ ॥ ॥

सौख्यंस्यात् ॥ क्रीडितावस्थासौख्यदात्री ॥ प्रसुप्ताप्रसुप्तावस्थानिद्रां कलिंकलहमपिकुरुते ॥ भुक्तावस्थादेहपीडां । ज्वरावस्थाभयं । कंपितावस्थातापहानी ॥ सुस्थितावस्थासुखंक्रमेणस्यादित्यन्वयः ॥ ३२ ॥ इतिदिवाकरविरचितेमासदिनप्रवेशादिविचारः ॥ ३३ ॥ अथमृगयाविचारः ॥ सवीर्याविति ॥ कुजज्ञौभौमबुधौसवीर्यौबलिष्ठौतदानृपाखेट

सिद्ध्यैराज्ञांमृगयासिद्ध्यैभवतः ॥ अथयदातौवीर्यहीनौनिर्वलौतदामृगयासिद्धिर्नस्यात् ॥ जलाख्यैःजलसंज्ञकराशिभिः कर्कवृश्चिकमीनाख्यैःजलाखेटमाहुःजलसंवंधिआखेटंमृगयामाहुःपर्वतसंज्ञकराशिभिःमेषसिंहधनुर्धराख्यैः ॥ नगाखेटंपर्वतसंबंधिमृगयांप्राहुः ॥३४॥ अथान्यदाह ॥ लग्नास्तनाथाविति ॥ लग्नास्तनाथौलग्नसप्तमभावस्वामिनौकेंद्र १।४।७।१० एतदन्यतमस्थानस्थितौविवलौनिर्वलौतदामृगयाक्लेशदायिनीउक्ताकथिता ॥ पुनर्यदितौवीर्याढ्यौवलिष्ठौतदामृगयाशुभ

लग्नास्तनाथौकेंद्रस्थौनिर्वलौक्लेशदायिनी ॥ मृगयोक्ताशुभफलावीर्याढ्यौयदितौपुनः ॥
॥३५॥ अथभोजनचिंता ॥ लग्नाधिपोभोज्यदातासुखेशोभोज्यमीरितं ॥ बुभुक्षामदपः
कर्मपतिर्भोक्तेतिचिंतयेत् ॥ ३६ ॥ लग्नेलाभेचसत्खेटयुतदृष्टेसुभोजनम् ॥ जीवेलग्नेसिते
वापिसुभोज्यंदुःस्थितावपि ॥ ३७ ॥ मंदेतमसिवालग्नेसूर्येणालोकितेयुते ॥ लभ्यतेभोज
नंनात्रशस्त्रभीतिस्तदाक्वचित् ॥ ३८ ॥ ॥ ॥ ॥

फला ॥३५॥ अथभोजनचिंता ॥ लग्नाधिपइति ॥ लग्नस्वामीभोज्यदाताभोजनदाता ॥ सुखेशः चतुर्थस्थानस्वामीभोजनंभोजनवस्तुईरितंउक्तं ॥ मदपःसप्तमस्थानस्वामीबुभुक्षाभोक्तुमिच्छा ॥ कर्मपतिःदशमस्थानस्वामीभोक्ताभोजनकर्ता इतिचिंतयेत् विचारयेत् ॥३६॥ अथान्यदाह दुःस्थितावपिभोजनप्राप्त्यसंभवज्ञानेपि अकस्मात्सुभोजनप्राप्तिः ॥३७॥३८॥

॥ ३९ ॥ ४० ॥ ४१ ॥ स्थिरराशिगतेसतिसकृदेकवारंद्विस्वभावराशिगतेद्विवारम् ॥ ४२ ॥ मूलेति ॥ यस्मिन्कस्मिं

रविदृष्टंयुतंवापिलग्नंयदितत्रहि ॥ उपवासस्तदावाच्योनक्तंवाविरसाशनम् ॥३९॥ चंद्रे
कर्मगतेभोज्यमुष्णंशीतंसुखेकुजे ॥ तुर्येखेटस्यवसतोभोज्यान्नेरसमादिशेत् ॥४०॥ स्निग्ध
मन्नंसितेतुर्येतैलसंस्कृतमर्कजे ॥ नीचोपगेकदशनंविरसंनचसंस्कृतं ॥४१॥ सूर्यादिभिर्लग्न
गतैःसवीर्यैराजादिगेहेभुजिमामनंति॥सुखेसुखेशेसवलेसुभोज्यंचरादिकंस्यादसकृत्सकृद्भिः
॥४२॥मूलत्रिकोणगेखेटेलग्नेपितृगृहेऽशनम्॥मित्रालयेमित्रभस्थेशत्रुगेहेऽरिगेहगे॥४३॥शुभे
क्षितयुतेलग्नेवलाढ्येस्वगृहेभुजिः ॥ गृहराशिस्वभावेनयत्नादन्यत्रचिंतयेत् ॥४४॥ तिलान्न
मर्केहिमगौसुतंडुलाभौमेमसूराश्चणकाश्चभोज्यम्॥बुधेसमुद्गाःखलुराजमाषागुरौसगोधूम
भुजिःसवीर्ये ॥ ४५ ॥ शुक्रेयवावाजरिकायुगंधराःशनौकुलित्थादिसमापमन्नम् ॥ भोज्यं
तृणान्नंशिखिराहुवीर्याच्छुभेक्षणालोकनतःसहर्षम् ॥ ४६ ॥ ॥ ॥

श्चिरखेटेमूलत्रिकोणस्थलग्नस्थेसतिपितृगेहेभोजनम् ॥ ४३ ॥ अन्यदासमाप्तिस्पष्टम् ॥ ४४ ॥ ४५ ॥ ४६ ॥ ॥

सूर्येमूलंपुष्पमिंदौकुजेस्यात्पत्रंशाखाचापिशाकंसवीर्यं ॥ शुक्रेज्यज्ञैर्व्यंजनंभूरिभेदंमंदेनेत्थं
सामिषंराहुकेत्वोः ॥४७॥ अथस्वप्नचिंता ॥ लग्नांशगेऽर्कैतनुगेऽपिवास्मिन्दुःस्वप्नमीक्षेतयथा
र्कविंबम् ॥ रक्तांबरंवह्निमथापिचंद्रेशुभ्राश्वरत्नांबरपुष्पवस्त्रम् ॥४८॥ स्त्रियःसुरूपाश्चकुजेसु
वर्णरक्तांबरस्रङ्मणिविद्रुमाणि ॥ बुधेहयस्वर्गतिधर्मवार्तागुरौरतिर्धर्मकथासुरेक्षा ॥४९॥
सद्बंधुसंगश्चसितेजलानांपारेगतिर्देवरतिर्विलासः ॥ शनावरण्याद्रिगतिश्चनीचःसंगश्चरा
हौशिखिनीत्थमेव ॥५०॥ सहजधीमदनायरिपुस्थितोयदिशशीगुरुभानुसितेक्षितः ॥ नव
मकेंद्रगतेषुशुभग्रहेस्ववलयामनुजोरमतेतदा ॥५१॥ इतिस्वप्नचिंता ॥ आसीदसीमगुणमं
डितपंडिताग्र्योव्याख्याद्भुजंगपगवीःश्रुतिवित्सुवृत्तः ॥ साहित्यरीतिनिपुणोगणितागमज्ञ
श्चिंतामणिर्विपुलगर्गकुलावतंसः ॥ ५२॥ तदात्मजोनंतगुणोस्त्यनंतोयोऽधोक्षसदुक्तिकि
लकामधेनुम् ॥ संतुष्टयेजातकपद्धतिंचन्यरूपयद्दुष्टमतंनिरस्य ॥ ५३ ॥ ॥ ॥

॥ ४७ ॥ ४८ ॥ ४९ ॥ ५० ॥ ५१ ॥ ५२ ॥ ५३ ॥ ॥ ॥ ॥

॥ ५४ ॥ ५५ ॥ इतिदिवाकरदैवज्ञात्मजश्रीविश्वनाथदैवज्ञविरचितायांवर्षतंत्रटीकायांस्वप्नविचारःसमाप्तः ॥ समाप्त

प्रज्ञांवयासाविनतोविपश्चित्श्रीनीलकंठःश्रुतिशास्त्रनिष्ठः ॥विद्वच्छिवप्रीतिकरंव्यधासीत्स
माविवेकंमृगयावतंसम् ॥ ५४ ॥ शाकेनंदाभ्रबाणेंदु १५०९ मितआश्विनमासके ॥
शुक्लेऽष्टम्यासमातंत्रंनीलकंठबुधोऽकरोत् ॥ ५५ ॥ इतिश्रीगर्गवंशोद्भवश्रीदैवज्ञानंतसुत
श्रीनीलकंठदैवज्ञविरचितंवर्षतंत्रंसमाप्तम् ॥ २ ॥ ॥ ॥

मिदंद्वितीयंतंत्रम् ॥ २ ॥ ॥ ॥ ॥ ॥ ॥

श्रीगणेशायनमः ॥ अथप्रश्नकरणंनिरूप्यते ॥ अथप्रश्नविचारस्यप्रयोजनमाह वराहः ॥ दैवज्ञस्यहिदैवेन सदसत्फलवांछया ॥ अवश्येगोचरेमर्त्यःसर्वःसमुपनीयते ॥१॥ अश्रौषीच्चपुराविष्णोर्ज्ञानार्थंसमुपस्थितः॥ वचनंलोकनाथोपिब्रह्माप्रश्नादिनिर्णयं ॥ २ ॥ आदिशब्देनस्वरशकुनादिकम् ॥ तस्मान्नृपःकुसुमरत्नफलाग्रहस्तःप्रातःप्रणम्यवरयेदपिप्राङ्मुखस्थः॥ होरांगशास्त्रकुशलान्हितकारिणश्चसंहृत्य (एकीकृत्य) दैवगणकान्सकृदेवपृच्छेत् ॥३॥ उत्पलः ॥ दशभेदंग्रहगणितंजातकमवलोक्यनिरवशेषमपि ॥ यःकथयति शुभमशुभंतस्यनमिथ्याभवेद्वाणी ॥ ४ ॥ एतच्चप्रश्ननिरूपणंविनीतेभ्योदीयमानंसत्फलंनान्येभ्यइत्युक्तं समरसारे ॥ विनयावनतायदीयमानाप्रभवेत्कल्पलतेवसत्फलायेति ॥ ५ ॥ श्रुतिरपि ॥ विद्याहवैब्राह्मणमाजगामगोपायमाशेवधिष्टेऽहमस्मि ॥ असूयकायानृजवेशठायनमांब्रूयादवीर्यवतीतथास्यामिति ॥ शेवधिर्निधिः ॥ दीयमानमित्यनेनउपदेशःशिष्येभ्यःप्रष्टृभ्योनिरूपणमुभयमप्युच्यते ॥ अतएवश्रुतौनमांब्रूयादितिसामान्येनोक्तम् ॥ वचिरत्रप्रतिपादनक्रिया ॥ यस्तत्रप्रष्टाकुटिलःसरलोवेतिज्ञानंप्रश्नतंत्रे ॥ ऋजुरयमनृजुर्वायंप्रष्टापूर्वंपरीक्ष्यलग्नवलात् ॥ गणकेनफलंवाच्यंदैवंतच्चित्तगंस्फुरति ॥१॥ लग्नस्थेशशिनिशनौकेंद्रस्थेज्ञेदिनेशरश्मिगते ॥ भौमज्ञयोःसमदृशालग्नगचंद्रेऽऋजुःप्रष्टा ॥ २॥ लग्नेशुभग्रहयुतेसरलःक्रूरा

न्विते भवेत्कुटिलः ॥ लग्नेऽस्तेसौम्यदृशाविधुगुरुदृष्ट्याचसरलोऽयं ॥ ३॥ यदिगुरुबुधयोरेकःपश्यत्यस्ताधि
पंचरिपुदृष्ट्या॥ तत्कुटिलःप्रष्टाखल्वनयोरेकस्तयोःसाधुः ॥ ४ ॥ दशभेदादीप्तादयस्तांश्चसमनंतरमेववक्ष्या
मः ॥ अपरेतुमध्यमदेशांतरचरांतरोदयांतरभुजफलस्फुटीकरणवक्रमार्गोदयास्तभेदेनदशभेदत्वमाहुः ॥
यदाचरांतरदेशांतरमध्यगतमेवेतिमतंतदाजीवसंस्कारवशेनदशभेदतोह्या। अथयत्रबहवःप्रश्नायुगपत्संभ
वंतितत्रनिरूपणप्रकारश्चण्डेश्वरप्रश्नविद्यायाम् ॥ आदिमंलग्नतोज्ञानंचंद्रस्थानाद्वितीयकम् ॥ सूर्यस्थाना
त्तृतीयंस्याच्चतुर्थंजीवगृहाद्भवेत् ॥ बुधभृग्वोर्बलीयःस्यात्तद्गृहात्पंचमंपुनरित्यादिरुक्तःसतुनयुक्तः ॥ सकृदेव
पृच्छेदितिवराहवाक्यस्वरसात् ॥ नानाकर्तृकानेकप्रश्नेष्वपिगणकस्यानेकनिरूपणनिषेधात् ॥ तदुक्तंज्ञा
नमुक्तावल्याम् ॥ सम्यग्विचार्यलग्नंब्रूयात्प्रश्नंसकृद्यथाशास्त्रं ॥ यस्त्वेकंब्रूतेऽसौतस्यनमिथ्याभवेद्वाणी ॥
अतएवचिंतामणौ ॥ राशिचक्रंसमभ्यर्च्यफलैःपुष्पैःसरत्नकैः ॥ प्रष्टासुभूमौदैवज्ञानेकंपृच्छेत्प्रयोजनम् ॥
दशभेदंग्रहाणांचगणितंभावजंतथा ॥ विमृश्यैकंचकथयेन्नानेकंप्राहपद्मभूरिति ॥ दीप्ताद्यंदशभेदंचग्रहाणां
भावजंफलं ॥ विचार्यप्रवदेद्यस्तुतस्योक्तंनान्यथाभवेत् ॥ दीप्तोदीनोथमुदितःस्वस्थःसुप्तोनिपीडितः ॥
मुषितःपरिहीनश्चसुवीर्यश्चाधिवीर्यकः ॥ स्वोच्चेदीप्तःसमाख्यातोनीचेदीनःप्रकीर्तितः ॥ मुदितोमित्रगेह

स्थः स्वस्थश्चस्वगृहेस्थितः ॥ शत्रुगेहस्थितःसुप्तोजितोन्येननिपीडितः ॥ नीचाभिमुखगोहीनोमुषितोऽस्तं गतोग्रहः ॥ सुवीर्यःकथितःप्राज्ञैःस्वोच्चाभिमुखसंस्थितः ॥ अधिवीर्योनिगदितःसुरश्मिःशुभवर्गजः ॥ दीप्तेः सिद्धिश्चकार्याणांदीनेदुःखसमागमः ॥ स्वस्थेकीर्तिस्तथालक्ष्मीरानंदोमुदितेमहान् ॥ सुप्तेरिपुभयंदुःखंध नहानिर्निपीडिते ॥ मुषितेपरिहीनेचकार्यनाशोऽर्थसंक्षयः ॥ गजाश्वकनकावाप्तिःसुवीर्येरत्नसंपदः ॥ अधि वीर्येराज्यलब्धिर्ग्रहैर्मित्रार्थसंगमः ॥ अथग्रहस्वरूपम् ॥ पूर्वःसत्वंनृपस्तातःक्षत्रंग्रीष्मोरुणश्चलः ॥ मधुहक् पैत्तिकोधातुःसूरःसूक्ष्मकचोरविः ॥ कफोवर्षामृदुर्मातापयोगौरश्चसात्विकः ॥ जीवोवैश्यश्चरोवृत्तोमारुतां शोविधुःसुहक् ॥ ग्रीष्मःक्षत्रतमोरक्तोयाम्यःसेनाग्रणीश्चरः ॥ युवाधातुश्चपिंगाक्षःक्रूरःपित्तंशिखीकुजः ॥ शरदीशोहरिर्दीर्घःपंढोमूलंकुमारकः ॥ लिपिज्ञउत्तरेशश्चशूद्रःसौम्यस्त्रिधातुकः ॥ सत्वंपित्तोहिमःश्लेष्मादी र्घोमंत्रीद्विजोनरः ॥ मध्वैशानीकफोजीवोमधुपिंगलहक्तथा ॥ शुक्रःशांतोद्विजोनारीवैश्योमंत्रीचरःसि तः ॥ आग्नेयीदिक्कफश्चाम्लःकुटिलासितमूर्धजः ॥ कृष्णस्तमःकृशोवृद्धःपंढोमूलांत्यजोऽलसः ॥ शिशिरः

१ स्वोच्चस्थेदशसूर्येनवचंद्रेपंचभूपुत्रे ॥ पंचेंदुजेतथेज्येसप्ताष्टौभार्गवेशनौपंच ॥ नीचविहीनचक्राच्छुद्धःपड्नवतोयदाभ्यधिकः ॥ आत्मी यरश्मिगुणितः पड्भक्ताद्रश्मयोयस्मात् ॥ पंचेंदुतोयथायाधिकास्तथाशुभकलाधिक्यम् ।

पवनःक्रूरःपश्चिमोवातुलःशनिः ॥ राहुर्धातुःशिखीमूलंशेपमन्यच्चमंदवत् ॥ चिंतनीयंविलग्नेज्ञात्केंद्रगाद्वा वलाधिकात् ॥ अथप्रश्नजातंकस्माल्लग्नादिभावाद्विचारणीयमित्याह ॥ सौख्यमायुर्वयोजातिरारोग्यंलक्षणं गुणं ॥ क्लेशाकृतीरूपवर्णास्तनोश्चिंत्यंविचक्षणैः ॥ मुक्ताफलंचमाणिक्यंरत्नधातुधनांबरं ॥ हयकार्योध्वविज्ञानंवित्तस्थानाद्विलोकयेत् ॥ भुवनदीपके ॥ भगिनीभ्रातृभृत्यानांदासकर्मकृतामपि ॥ कुर्वीतवीक्षणं विद्वान्सम्यग्दुश्चिक्यवेश्मतः ॥ वाटिकाखलकक्षेत्रमहौपधिनिधीनपि ॥ विवरादिप्रवेशंचपश्येत्पातालतो बुधः ॥ गर्भापत्यविनेयानांमंत्रसंधानयोरपि ॥ विद्याबुद्धिप्रवंधानांसुतस्थानेविनिर्णयः ॥ चौरभी रिपुसंग्रामखरोष्ट्रक्रूरकर्मणाम् ॥ मातुलातंकभृत्यानांरिपुस्थानाद्विनिर्णयः ॥ वाणिज्यंव्यवहारंचविवादं चसमंपरैः ॥ गमागमकलत्राणिपश्येत्प्राज्ञःकलत्रतः ॥ नद्युत्तारेध्ववैपम्येदुर्गेशात्रवसंकटे ॥ नष्टेदुष्टेरणे व्याधौछिद्रेछिद्रंनिरीक्षयेत् ॥ वापीकूपतडागादिप्रपादेवगृहाणिच ॥ दीक्षांयात्रांमठंधर्मंधर्मान्निश्चित्यकीर्तयेत् ॥ राज्यंमुद्रांपरंपुण्यंस्थानंतातंप्रयोजनम् ॥ वृष्ट्यादिव्योमवृत्तांतंव्योमस्थानान्निरीक्षयेत् ॥ गजाश्व यानवस्त्राणिसस्यकांचनकन्यकाः ॥ विद्वान्विद्यार्थयोर्लाभंलक्षयेल्लाभलग्नतः ॥ त्यागभोगविवादेपुदाने एकृपिकर्मसु ॥ व्यवस्थानेपुसर्वेपुविद्धिविद्वन्व्ययंव्ययात् ॥ पट्पंचाशिकायां ॥ योयोभावःस्वामिदृष्टो

युतोवासौम्यैर्वास्यात्तस्यतस्यास्तिवृद्धिः ॥ पापैरेवंतस्यभावस्यहानिर्निर्देष्टव्यापृच्छतांजन्मतोवा ॥ १ ॥
सौम्येविलग्नेयदिवास्ववर्गेशीर्षोदयेसिद्धिमुपैतिकार्यम् ॥ अतोविपर्यस्तमसिद्धिहेतुकृच्छ्रेणसंसिद्धिकरंवि
मिश्रम् ॥ २ ॥ भुवनप्रदीपे ॥ लग्नपतिर्यदिलग्नंकार्याधिपतिश्चवीक्षतेकार्यम् ॥ लग्नाधीशःकार्यंकार्येशः
पश्यतिविलग्नम् ॥ लग्नेशःकार्येशंविलोकयेल्लग्नपंतुकार्येशः ॥ शीतगुदृष्टौसत्यांपरिपूर्णाकार्यसंसिद्धिः ॥
कथयंतिपादयोगंपश्यतिसौम्योनलग्नपोलग्नं ॥ लग्नाधिपंचपश्यतिशुभग्रहश्चार्धयोगोत्र ॥ एकःशुभोग्रहो
यदिपश्यतिलग्नाधिपंविलोकयति ॥ लग्नंपादोनयोगमाहुस्तदाबुधाःकार्यसंसिद्धौ ॥ लग्नपतौदर्शनेसति
शुभग्रहौद्वौत्रयोथवालग्नम् ॥ पश्यंतियदितदानीमाहुर्योगंत्रिभागोनं ॥ क्रूरावेक्षणवर्ज्यश्चंद्रःसौम्याश्चखे
चरालग्नं ॥ लग्नेशदर्शनेसतिपश्यंतःपूर्णयोगकराः ॥ क्रूराक्रांतःक्रूरयुतःक्रूरदृष्टश्चयोग्रहः ॥ विरश्मितांप्रप
न्नश्चसोऽनिष्टफलदायकः ॥ समरसिंहे ॥ अमुकंगदेतिकार्यंकदाभविष्यत्यमुत्रपृच्छायां ॥ लग्नेलग्नाधिप
तिःकार्यंकार्याधिपःपश्येत् ॥ लग्नस्थःकार्येशःपश्यतिचेल्लग्नपंतदेवभवेत् ॥ तत्कार्यंयद्यन्यस्थितंतदासत्वरं
नस्यात् ॥ पश्यतियदाचलग्नंद्रक्ष्यतिचंद्रंविलग्नपंचयदा ॥ लग्नेकार्येचयदाद्वयोश्चयोगेतदासिद्धिः ॥ यदि
लग्नपंचपश्यतिकार्याधीशोविलग्नमथतस्य ॥ कार्यस्यहानिरुक्तालग्नमृतेकिमपिनोवाच्यम् ॥ इतिसामान्य

